न ब्राह्मणभोजनम्। यत्पशोः कर्मापवर्गे ब्राह्मणभोजनं तत्कर्त्तव्यमेवेति ॥

अष्टकाकर्म वक्ष्यामः। ऊर्ध्वमाग्रहायण्यास्तिस्रोष्टकाः। अपरपक्षे तु तासां प्रथमायां शाकं जुहोति। अत्र स्तरणाघाराज्यभागा निर्विकल्पाः। उपसे ग्रहणप्रोक्षणे। उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा तत "इयमेवसायाप्रथमाव्युचदन्तरस्याश्चरतिप्रविष्टा वधूर्जजान नवक्रु जनित्री त्रय एनां महिमानः सचंतां स्वाहे"त्यनेन मन्त्रेण यथोक्तं स्रुचौ चतुर्गृहीतं कृत्वा "इयमेयेवे" ति एकाहुतिः ततः स्विष्टकृतं "यस्यां वैवस्वत" इति शाकं स्थालीपाकधर्मेण हुत्वा "यस्यां वैवस्वतोयमः सर्वेदेवाः समाहिताः अष्टका सर्वतोमुखी सामेकामानतीतृपत् आहुस्ते ग्रावाणोदन्तानूधः पवमानः मासाश्चार्द्धमासाश्च मनस्ते सुमनामुखि स्वाहे" त्यनेन मन्त्रेण स्विष्टकृतं हुत्वा ततो महाव्याहृतिसर्वप्रायश्चित्तादि तन्त्रशेषं समापनीयमिति। मध्यमायां माघ्यवर्षे च समानमेव कर्म तद्वक्ष्यामः। येषामाषाढीं पौर्णमासीमतीत्यानन्तरं वर्षाकालः प्रवर्तते तेषां श्रावणीं पौर्णमासीमतीत्याष्टका भवन्ति, येषां पुराषाढ्या अनन्तरामावास्यामतीत्य वर्षाकालः प्रवर्त्तते तेषां प्रौष्ठपद्यां पौर्णमासीमतीत्याष्टकाकर्म भवति। अपसव्यं कृत्वा प्राग्दक्षिणामुख उपलेपनोल्लेखनोद्धरणाभ्युक्षणाग्निप्रणयनं प्रदक्षिणं समूहनं ब्रह्मणः प्रतिष्ठापनं प्रणीताप्रणयनं ततः सान्वाच्यस्तरणं ततोग्नेः पुरस्तात्पलाशशाखायाः सपत्राया निखननन्ततस्तस्या उत्तरतः पशुमुपस्थाप्य ततः "पितृभ्यस्त्वा जुष्टमुपाकरोमी"त्यनेन मन्त्रेणोपाकरणं ततः पवित्रोत्पादनम्। उत्तरतः प्रणीताप्रणयनं ततः "पितृभ्यस्त्वाजुष्टं प्रोक्षामी"ति पशोः प्रोक्षणं ततः "पितृभ्यस्त्वाजुष्टंनियुनज्मी"नीत्यनेन मन्त्रेण पलाशशाखायां बन्धनं ततः पर्यग्नीकृत्वोदग्ग्रीवं प्राक्शिरसमुदक्पादं

प्रत्यक्शिरसं वा मुखमवाश्यमानं संज्ञप्य वपां गृहीत्वा ततो वपायां हुतायामङ्गानां श्रपणं ततोनेनैव प्रकारेण ग्रहणासादनप्रोक्षणानि कृत्वा स्थालीपाकं श्रपयेत् । इदानीं चरुधर्मप्राप्तं प्राक्कृतं तावत्कुर्याद्यावदाघाराज्यभागान्तं कृत्वा तत उपस्तीर्य हिरण्यमवधार्य वपां गृहीत्वा पुनर्हिरण्यमवधार्याभिघार्य ततो महाव्याहृतयश्चतस्रो "येतानृषुर्देवत्राजेहमानो"इति चतस्र एतान् अष्टौ मन्त्रान् पठित्वान्ते स्वाहाकारेण वपां जुहोति । अथ वा "वहवपांजातवेदः पितृभ्योयत्रेनान्वेस्थसुकृतस्यलोके मेदसः कुल्या उपधातास्रवन्तिसत्याः सन्तु यजमानस्य कामाः स्वाहे"त्यनेन मन्त्रेण वपां जुहुयात् । ततोऽङ्गेभ्यस्तोकं गृहीत्वा स्थालीपाकं गृहीत्वा स्थालीपाकं पूषाभ्यामाज्येन मिश्रयित्वा ततः सकृदाज्यमिश्रद्रव्यस्य द्विः पञ्चार्षेयाणां त्रिः तत उपर्यभिघारयति । अनेन प्रकारेण महाव्याहृतयश्चतस्रो "येतानृषुर्देवत्राजेहमानाहोत्राविदस्तोम" इति चतस्र एभिरष्टाभिर्मन्त्रैः स्वाहाकारान्तैरष्टावाहुतीर्हुत्वा "यस्यांवैवस्वतोयम" इति स्विष्टकृतं हुत्वा ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयम् । एष तावत्पशुपक्षः । स्थालीपाको वेत्युक्तं तद्वक्ष्यामः । उपलेपनोल्लिखनाद्याघाराज्यभागान्तं निर्विकल्पं कृत्वा ततश्चरोरुपरि मण्डकजालिं गृहीत्वा वपाहोममन्त्रेणान्यतरेण हुत्वा ततः पूर्ववदष्टाहुतयः स्विष्टकृतं हुत्वा तत "अनुमतयेस्वाहे" त्याज्यस्य हुत्वा ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयमिति ॥

इदानीं जारजातस्य यजमानस्याष्टकाकर्म वक्ष्यामः । "अन्तर्हिता गिरयोन्तर्हितापृथिवी महीमेदिवाग्निश्च सर्वाभिरन्यमन्तः पितुर्दधेमङ्गलदेव्यै स्वाहा, यास्तिष्ठन्तियास्रवन्तियादभ्राः परिसस्रुषीः अद्भिः सर्वस्यभर्तृभिरन्यमन्तः पितुर्दधेमङ्गलदेव्ये स्वाहा, यन्मेमाता प्रलुलुभे विचरन्ति पतिव्रता रेनस्तत्पिता मेवृ-

क्षांमातुरन्योवपद्यते मङ्गलादेव्यै स्वाहा" एते चत्वारो मन्त्रा महाव्याहृतीनां स्थाने वैकल्पिका भवन्ति मङ्गलदेव्या इत्यस्मिस्थाने यजमानमातृणां ग्रहणम्। पायसश्चरुः कर्त्तव्यः वैकल्पिक एव। अपरे तु व्याचक्षते पितृजारजातयोर्द्वयोरपि पक्षयोः पायसश्चरुर्वैकल्पिको भवति। द्वयोरप्यष्टकयोरुपलेपनोल्लेखनादि ब्रह्मणो विमोकान्तं सर्वं प्राचीनोपवीतीना प्राग्दक्षिणामुखेन कर्त्तव्यमिति॥

अपरस्मिन्दिवसे पिण्डपितृयज्ञः कर्त्तव्यः। तस्य विधिः कल्पे पठितः सोत्रैव लिख्यते। अपराह्णे आवसथ्याग्नेः पुरस्तादपसव्यं कृत्वा शूर्पं स्थालीं स्फ्यं पात्रीमुलूखलमुसले मेक्षणे च सादयित्वा ततः पश्चादग्नेर्नीत्वा दक्षिणाग्रेषु कुशेषु प्राङ्मुखं स्फ्यं निधाय तस्योपरिष्टाद्व्रीहीन्पात्र्यान्तस्यैव पुरो दक्षिणामुखे शूर्पे स्थालीन्ततो दक्षिणामुखः सव्यं जानु पातयित्वाधोमुखेन मुष्टिना व्रीहीन् गृह्णाति "देवदत्तायजुष्टंगृह्णामि" इत्यनेन प्रकारेण पितृपितामहप्रपितामहानां नामानि मनसा ध्यायन्मुष्टिमेकं गृह्णाति। यथा स्रुतः सन् स चरुरूनो भवति। ततः पश्चात्कुटिता एकवारं छटिताः कृत्वा चरुं श्रपयेत्। ततो संस्कृतेन स्रुतेनाभिघार्य प्रतीच्यां दिशि ततः प्रदक्षिणं सकृद्दर्भानग्रे गृहीत्वा प्रदक्षिणमनियताग्रास्तृणाति। ततो प्रदक्षिणं सकृदेव पर्युक्षते। ततो यज्ञोपवीती भूत्वा प्राङ्मुखो दक्षिणं जान्वाच्य "अग्नयेकव्यवाहनायस्वाहा, सोमायपितृमतेस्वाहा, यमायाङ्गिरस्वतेपितृमतेस्वाहे" तितिस्र आहुतीः स्थालीपाकस्य लोकप्रसिद्धेन मेक्षणेन हुत्वा मेक्षणमग्नौ क्षिपेद्। ततोऽपसव्यं कृत्वा "अपहता असुरारक्षांसिवेदिषद्" इत्यनेन मन्त्रेणाग्नेः दक्षिणेन उद्धृत्य ततस्तूष्णीं पर्युक्ष्य "येरूपाणिप्रतिमुञ्चमाना असुरा सन्तः स्वधया च-

रन्ति परापुरोनिपुरो येभवन्त्यग्निष्टांल्लोकात्प्रणुदात्यस्मां ” नि-त्यनेन मन्त्रेणाभ्युक्षिते प्रदेशे साग्निकमुल्मुकं दक्षिणार्द्धे निधाय “ देवदत्तअवनेनिक्ष्व येचत्वामत्रानु ” अनेन मन्त्रेण स्वपितुर्नामोच्चार्योत्तानतर्जन्यङ्गुष्ठावन्तरेण कुशेष्वपो निषिञ्चति । तत अनेनैव प्रकारेण दक्षिणतः पितामहस्य प्रपितामहस्य च हुतशेषं त्रीणि पिण्डानि कृत्वा ततो “ देवदत्तएतत्तेयेचत्वामत्रानु ” इत्यनेन मन्त्रेण पुनरावृत्तेन पितृपितामहप्रपितामहानां नामान्युच्चार्य यथावनिक्तं पिण्डान् दद्यात् । तत “ अत्रपितरोमादयध्वंयथाभागंपितर आवृषायध्व ” मिति जपित्वा ततस्तूष्णीं प्रदक्षिणं पर्यावृत्य प्रत्यङ्मुखो भूत्वा त्रीन् प्राणायामान् धारयित्वा ततस्तूष्णीं पर्यावृत्य पिण्डाभिमुखो भूत्वा “ अमीमदन्तपितरोयथाभागमवीवृषते ” ति जपति । ततः पूर्ववदवनेनिज्य “ नमोवः पितरो जीवायनमोवः पितरः शोषायनमोवः पितरो घोरायनमोवः पितरोरसाय नमोवः पितरो बलायनमोवः पितरो मन्यवे नमोवः पितरो मृत्यवेनमोवः पितरः स्वधायैनमोवः पितरः पितरोनमोवो ये अत्र पितरः पितरस्थ यूयन्तेषां श्रेष्ठा भूयास्थ यइह पितरो मनुष्यावयं तेषां श्रेष्ठाभूयास्म येअत्र पितरः स्वधा युष्माकं साय-इहापितर एचतुरस्माकं सगृहां नः पितरो दत्त ” इतीमं मन्त्रं जपित्वा तत “ एतद्वः पितरोवासोवध्वंपितर ” इत्यनेन मन्त्रेण पुनरावृत्तेन त्रयाणामपि पिण्डानां यथा भवन्ति तावन्मात्राणि सूत्राणि दत्वा तत “ ऊर्जंवहन्तीरमृतंघृतं पयः कीलालं परिस्रुतं स्वधास्थतर्पयत नः पितॄन् ” इत्यनेन मन्त्रेण पात्रप्रक्षालनं कुशेष्वेव निक्षिप्य तत आघ्राय पिण्डान् पात्रे कृत्वा प्राश्नीयात् । अथ वा ब्राह्मणाय दद्यात् । उदके वा क्षिपेत् । यदि पत्नी पुत्रकामा स्यात्तत “ आधत्तपितरोगर्भंकुमारं पुष्करस्रजं यथेहपुरुषो

सदि " इत्यनेन मन्त्रेण मध्यमपिण्डं प्राश्नीयात् । ततस्तूष्णीमुल्मुकमग्नौ क्षिपेत् । सकृदाच्छिन्नांश्च कुशानग्नौ क्षिप्त्वा अप्रदक्षिणं पर्युक्षेत् । दत्तकादयो ये पुत्रास्ते एकैकस्मिन्प्रदेशे द्वौ पिण्डौ ददाति येन जातो यस्य च सङ्गत इति । जीवत्पितृकेण पिण्डपितृयज्ञो न कर्त्तव्यः। अथ करोति पितृणां होमान्तं वेति । इदं च कर्म तन्त्ररहितं यावदुक्तं भवति । आहुतीर्हुत्वा शेषमपसव्येनेति उत्तमायामपूपं जुहोति । अष्टकायै ग्रहणमुपलेपनोल्लेखनादिद्रव्यप्रोक्षणान्तं कृत्वा पिष्टमयान् कपालपक्वांस्त्रीनपूपान् कुर्यात् । अपरे व्याचक्षते घृतपूपाः कर्त्तव्याः। अन्यतरजातीयान पूपान्पक्त्वा करोति वा। आघाराज्यभागान्ते कृत्वा "ऊढश्चातिरात्रश्च संद्यश्चक्रीच्छन्दसा सहाअपूपकृदष्टके नमस्तेसुमनासुखिस्वाहे" इत्यनेन मन्त्रेणापूपावदानं समवत्तधान्यां कृत्वा गृहीत्वा चरुधर्मेण जुहोति। "यस्यांवैवस्वतोयम" इति स्विष्टकृतं हुत्वा महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयमिति ॥ मध्यमायां माध्यवर्षे च गोपशुरजः स्थालीपाको वेत्युक्तम् । एतेषामसंभवे "एषामिष्टके" इत्यनेन मन्त्रेण अकारान्तेन परगोरेकस्य तृप्तये यवसं दद्यात् । अथ वा अनेनैव मन्त्रेण तृणबहुलस्थाने तृणदहनं कर्त्तव्यम् ॥

इति अहिच्छत्राविषये कौसुंबरवास्तव्यवासुदेवकृतसाङ्ख्यायनगृह्यसङ्ग्रहे तृतीयोध्यायः समाप्तः ॥

श्राद्धं वक्ष्यामः । पूर्वेद्युर्ब्राह्मणान् वेदविदः पञ्च निमन्त्र्याऽभावे त्रीन् वा एकमेव वा ततोऽपराह्णे पिण्डपितृयज्ञवत्तथा ततो ब्राह्मणानाहूय परिवृते प्रदेशे द्वौ प्राङ्मुखौ त्रय उदङ्मुखाः कार्याः। प्राङ्मुखानां सर्वं यज्ञोपवीती प्रदक्षिणोपचारश्च कुर्यात् । उदङ्मुखानां सर्वं प्राचीनावीती विपरीतोपचारं च कुर्यात् । सर्वं च दैवपूर्वं कर्त्तव्यम् । दर्भा आसनार्थाः प्राङ्मुखानामृजवः । उदङ्मु-

खानां द्विगुणीकृत्य दातव्याः। यदि त्रयो ब्राह्मणास्ततो द्वौ प्राङ्मुखौ एक उदङ्मुखः, यदि द्वौ तत एकः उदङ्मुखः एक प्राङ्मुखः, यद्येकस्तत उदङ्मुखः प्राङ्मुखब्राह्मणस्थाने अग्निः स्थापयितव्यः। दर्भासनादनन्तरं यजमानो ब्राह्मणाश्च वाग्यमनं कुर्युः। तत आवाहनम्। "विश्वेदेवानावाहयिष्य" इत्यनेन मन्त्रेण प्राङ्मुखं पृच्छत्येकम्। ततः "आवाहये"त्यनेन मन्त्रेणाभ्यनुज्ञातः "विश्वेदेवासः आगते"त्यनेन मन्त्रेणावाह्य ततो "विश्वेदेवाःशृणुतेमं हवेम" इति जपति। तत "ओषधयः समवदन्त"इत्यनेन मन्त्रेणाक्षतैर्वेष्टयति। ततः "पितॄनावाहयिष्य"इत्यनेनोदङ्मुखान् पृच्छति। "आवाहय" इत्यनुज्ञातः "उशंतस्त्वानिधीमही"त्यावाह्य तत "आयन्तुनः पितरः अपहता असुरारक्षांसि वेदिषद" इति तिलैर्वेष्टयित्वा ततः पलाशवैकङ्कतकार्ष्मर्यवैल्वखादिरोदुम्बराणामन्यतमकाष्ठकृतानि समानि पर्णपुटानि वा मृण्मयानि वा मणीरजतसुवर्णताम्राणामन्यतमद्रव्यकृतानि पितृसमानसंख्याकानि पात्राणि कृत्वा द्वौ द्वौ कुशौ तिस्रस्तिस्रो वा उपर्यतर्द्धाय पात्रे "शंनोदेवीरभिष्टय" इत्यनेन मन्त्रेणाद्भिरापूरयित्वा "तिलोसिसोमदैवत्यो गोसवोदेवनिर्मितः प्रत्नमद्भिः पृक्तःस्वाहाकारेण देवान् प्रीणाहिनः स्वाहे" त्यनेन मन्त्रेण यवैरवकीर्य प्राङ्मुखाभ्यां ब्राह्मणाभ्यां दक्षिणहस्तावेकीकृत्य उदपात्रकुशौ प्राङ्मुखो दत्वा तिस्रो वा ततो "यादिव्याआपः पयसासंबभूवुर्या आन्तारिक्षा उत पार्थिवीर्याः हिरण्यवर्णा यज्ञियास्तानआपः शिवा सं स्योनाः सुहवा भवन्तु" इति पठित्वा "विश्वेदेवा एतद्वोअर्घ्य" मित्यनेन मन्त्रेण निनयेत्। ततो दक्षिणामुखो भूत्वा दक्षिणाग्रकुशावेकस्य ब्राह्मणस्य हस्ते दत्वा ततो "यादिव्याआप"इत्येवमादिकं मन्त्रं पठित्वा "देवदत्तैतेअर्घ्य" मित्यनेन मन्त्रेण पितृतीर्थेन ब्राह्मणहस्ते निन-

येत् । एवं पितृपितामहप्रपितामहानां नामान्युच्चार्योच्चार्य एकैकस्य हस्तेऽर्घ्यं दद्यात् । यदि ब्राह्मणा बहवो निमन्त्र्यन्ते ततो हस्तानेकीकृत्वार्घ्यं दातव्यम् । ततः पुत्रकामः "शुन्धन्तांलोकाः पितृषदनाः"इत्यनेन मन्त्रेण मुखं विमार्ष्टि । ततोऽर्घ्यपात्राणि पात्रान्तरे निवेशयित्वा ततः "पितृभ्यः स्थानमसी" त्यनेन मन्त्रेण तत्पात्रमध्ये कुर्यात् । ततो गन्धपुष्पधूपादीनि यथाविभवं प्रदाय गृहादेव सिद्धं घृताक्तमन्नं गृहीत्वा "अग्नौकरिष्ये" इति ब्राह्मणान् पृच्छति । ततः "कुरुष्वे" ति ब्राह्मणैरनुज्ञातः परिसमूहनादिहोमान्तं गृह्यैः पिण्डपितृयज्ञवत् कृत्वा हुतशेषं ब्राह्मणहस्तेषु ददाति । ततस्तस्मिन्नेव प्रदेशे यत्किंचिद्गृहे सिद्धं तत्सर्वमानीय परिवेषयित्वा ततः "पृथिवीतेपात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमिस्वाहा" इत्यनेन मन्त्रेण पात्रमालभेत् । तत "इदं विष्णुर्विचक्रमे" इति अंगुष्ठग्रहणं कृत्वा अन्नेऽवगाह्य ततो "विश्वेदेवाएतद्वोन्न"मिति प्राङ्मुखाभ्यां ब्राह्मणाभ्यां कल्पयित्वा ततः "देवदत्तएतत्तेअन्नंयेचत्वामत्रानु" अनेन प्रकारेण पितृपितामहप्रपितामहानां नामान्युच्चार्योदङ्मुखब्राह्मणेभ्यः पात्राणि कल्पयित्वा ब्राह्मणानां भोजनानुज्ञां ददाति । ततो भुंजानेषु ब्राह्मणेषु महाव्याहृतयश्चतस्रः " तत्सवितुर्वृणीमह " इत्येका "मधुव्वाताऋतायते" इति तिस्रः " उदीरतामवरउत्परास " इति चतुर्दश " स्वादिष्ठयामदिष्ठये " ति च शक्तितो जपेत् । "सहस्रशीर्षेति" षोडश अन्यानि च पवित्राणि शक्तितो जपेत् । ततस्तृप्तेषु ब्राह्मणेषु " तृप्ताःस्थ " इति पृच्छति । ततो ब्राह्मणा " स्तृप्तास्म " इति ब्रूयुः । ततः " शेषमन्न " मितिपृष्टा ब्राह्मणा " इष्टेभ्यः " इति ब्रूयुः । ततोऽपोशानं दत्वा पिण्डान् दद्यात् । ततः सर्वमन्नमेकस्मिन्पात्रे कृत्वा " अपहता असुरारक्षांसिवेदिषद " इत्यारभ्य सकृदाच्छि-

त्वानुप्रहरणान्तं पिण्डपितृयज्ञवत्करोति । ततः स्वस्य भर्तृपिण्डस्य पश्चिमेन तत्पत्नीनां किञ्चिदन्तर्द्धाय भर्तृणामिव पिण्डदानं कर्त्तव्यम् । कथम् ? । "मङ्गलदेवि अवनेनिक्ष्वयेचत्वामत्रानु, मङ्गलदेविएतत्तेपिण्डोयेचत्वामत्रानु" इति अनेन प्रकारेण । अन्ये होमादनन्तरं पिण्डदानमिच्छन्ति । ततः आचान्तेषु "विश्वेदेवाः प्रीयन्ता" मिति प्राङ्मुखौ कल्पयित्वा "देवदत्तस्तृप्यता" मिति पितृपितामहप्रपितामहानां नामान्युच्चार्योच्चार्योदङ्मुखान् कल्पयित्वा शक्तितो दक्षिणां दत्वा "वाजेवाजेवतवाजिनो" इति विसर्जयेत् । अस्मिन् कर्मणि यत्साङ्ख्यायने नोक्तं तत्स्मृत्यन्तरीयमिति ॥

एकोद्दिष्टश्राद्धं वक्ष्यामः । वैश्वदेवकं कर्म कुर्यात् । उदङ्मुखा ब्राह्मणा उपवेश्याः । पूर्ववदुपचारः । विशेषस्तूच्यते । आवाहनमग्नौकरणं च न कुर्यात् । एकं पवित्रमेकं चार्घ्यं पत्नीवर्जमेकः पिण्डः "स्वदित" मितितृप्तिप्रश्नः "उपतिष्ठता" मित्यक्षय्यस्थाने "अभिरम्यता" मितिविसर्जनम् "अभिरतास्म" इति ब्राह्मणा ब्रूयुः । एवं पितर्युपरते एकादशेहनि कृत्वा तावन्मृताहनि मासे मासिकं कर्त्तव्यं यावत्संवत्सरोऽपूर्णः । ततश्चत्वारि पात्राणि गन्धोदकेन पूरयित्वा त्रीणां पितृणामेकं प्रेतस्य "येसमानाः समनसः पितरोयमराज्ये तेषां लोकःस्वधानमोयज्ञोदेवेषुकल्पतां येसमानाः समनसो जीवा जीवेषुमामकाः तेषां श्रीर्मेकल्पतामस्मिल्लोके शतं समाः" इति मन्त्रद्वयेन प्रेतपात्रं पितृपात्रेष्वासिञ्चति । पिण्डोप्येवमेव कर्त्तव्यः । एवं सपिण्डीकरणं कृत्वा ततः पार्वणं पितृपितामहप्रपितामहेभ्यो दद्यात् । पैतृकस्तु प्रपितामहं वर्जयेत् । एतच्च सपिण्डीकरणं पुत्रैः करणीयम् । श्राद्धं वक्ष्यामः । सर्वं यज्ञोपवीतिना पितृकर्त्तव्यम् । अपुत्रस्य संवत्सरे

मृताहनि वान्धवैः एकोद्दिष्टङ्कर्त्तव्यम् ॥

आभ्युदयिकं श्राद्धं वक्ष्यामः। पैतृकमन्त्रा न जप्याः ऋजवो दर्भा यवैस्तिलार्थः। तृप्तिप्रश्ने "संपन्न" मितिपृच्छेत्। दधिवदराक्षतमिश्राः पिण्डाः। "नांदीमुखाः पितरः प्रीयंता"मित्यक्षय्यस्थाने। शेषं समानं पार्वणेन।

अथोपाकरणं वक्ष्यामः। ओषधीनां प्रादुर्भावे हस्तेन श्रवणेन वा। अपरे तु प्रादुर्भावकाल इति पठन्ति। तेषाममप्रादुर्भूतास्वप्योषधीषु हस्तश्रवणाभ्यामन्यतरस्मिन्नक्षत्रे कर्त्तव्यम्। अत्र स्तरणाघाराज्यभागा निर्विकल्पाः। आवसथ्याग्नावुपलेपनोल्लेखनान्तं कृत्वा ततः पवित्रोत्पादनाद्याघाराज्यभागान्तं कृत्वा तत अकण्डिताः सक्तवो भृष्टाश्च यवा दधि घृतं चतुष्टयमेकीकृत्यावदानधर्मेण "अग्निमीडेपुरोहित"मित्यारभ्य स्वाहाकारान्तैर्मन्त्रैः प्रत्यृचं जुहुयात् आपरिसमाप्तेः एवमेके आहुः। सूक्तानुवाकाद्याभिरिति वा। पूर्वपक्षस्य पक्षान्तरमेतत्। अध्यायार्षेयाभिरिति माण्डूकेयमतम्। श्रुतौ प्रायेण सर्वाणि मतानि पूर्वपक्षीकृत्य कौषीतकिमतमेव सिद्धान्तो भूतः अत्रापि शिष्टैस्तदेवाङ्गीकृतः। आज्यभागानन्तरं शिष्या अन्वारम्भते। मन्त्रोच्चारणमाचार्येण सहैव कुर्वन्ति। "अग्निमीडेपुरोहित"मित्यारभ्य "तच्छंयोरावृणीमहे" इति यावत्सूत्रकारेणैव कृता पद्धतिः। स्विष्टकृतं हुत्वा हुतशेषादेकदेशं गृहीत्वा आचार्यः शिष्यो गृह्यस्थमंत्रोच्चारणसमये "दधिक्राव्णोअकार्षमित्यनेन मंत्रेण प्राश्नाति। तत आचम्योपविश्य महाव्याहृतिसावित्रीवेदप्रभृतीनि स्वस्त्ययनानि जपित्वा ततः शिष्या आचार्याय किंचिद्दत्वा "स्वस्तिभवंतोब्रुवंत्वि"ति वदंति। तत आचार्य"ॐस्वस्ती"ति ब्रूते। ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापयित्वा त्रिरात्रमनध्यायं कुर्वन्ति ॥

उत्सर्गकर्म वक्ष्यामः । माघशुक्लप्रतिपदि ग्रामबाह्यतः प्रागुदीच्यां दिशि यवगोधूमादिसम्पन्नं प्रदेशं गत्वा आचार्यः कृतशौचः "उदुत्यंजातवेदस"मिति त्रयोदश "चित्रंदेवानामुदगा"दिति षट् "नामामित्रस्यवरुणस्यचक्षस" इति द्वादश "सूर्योनोदिवस्पात्वि"तिपञ्च एवा ऋचो जपित्वा ततः "शासइच्छामहेअसी"तिपञ्चर्चैः पुरस्ताद्द्वारस्य प्रदक्षिणं मृल्लोष्ठान् प्रत्यृचं क्षिपेत् । उपरि पञ्चमम् । तत आचार्यः सशिष्य ऋषींश्छन्दांसि देवताः श्रद्धामेधे च तर्पयित्वा ततः पितृपितामहप्रपितामहान् स्वान् स्वान्तर्पयन्ति । ततः द्विसप्तमान्मासान्नाध्येयम् । तर्पणविधिं चोपरिष्टाद्वक्ष्यामः । अपरे तु व्याचक्षते । ब्राह्मणान् भोजयित्वा ऋष्यादींस्तर्पयेत् । यद्यवश्यं पठेत्ततोऽहोरात्रं क्षपयित्वा पठेत् । अस्मिन्नवसरेऽनध्यायाः पठिताः । ते च सूत्रानुक्रान्ता एव कर्त्तव्याः आनुपूर्व्यां प्रयोजनमेव नास्तीति पद्धतिर्न कृता ॥

अध्यापनविधिं वक्ष्यामः । अनसूयवो ब्रह्मचारिण ऋजवः सन्तः संयतेन्द्रियाः शुचयोऽध्ययनशीला मेधाप्रतिभान्यायोपगता एवंलक्षणाः शिष्या अध्यापयितव्याः । आचार्यः प्राङ्मुख उपविशति उदङ्मुखो वा, दक्षिणतः शिष्य उदङ्मुखः प्रत्यङ्मुखो वा । शेषा आचार्याभिमुखा यथावकाशमुपविशन्ति । ततः " अधीहिभो " इत्याचार्यः शिष्यं प्रचोदयति । ततः आचार्येण निगदिते ओङ्कारं कृत्वा शिष्याः पठन्ति । ततः सततं पठित्वा समाप्ते पाठके "विरतास्मभो" एवमुक्त्वा भोक्तुं गच्छामो मूत्रपुरीषे कर्तुं गच्छाम इति स्वं स्वं प्रयोजनं कथयन्ति "विरतास्म" इत्येतस्य स्थाने । विसृष्टविरामास्तावत्स्युः पठतामन्तरेण पाठको गच्छेत् । न चान्तरेण गन्तुं दातव्यम् । यत्किञ्चिन्मार्जारादिकमन्तरेण गच्छेत् त्रिरात्रमुपोष्याहोरात्रं वा पुनः सावित्रीं जपेत् । ब्राह्मणेभ्यः किं

च्छिद्यत्वाहोरात्रमुपरम्य अध्ययनम् ॥

उदकतर्पणं वक्ष्यामः । तच्च समावृत्तस्य भवति । स्नात्वा मज्जनान्ते "अग्निस्तृप्यतु, वायुस्तृप्यतु, सूर्यस्तृप्यतु, विष्णुस्तृप्यतु, प्रजापतिस्तृप्यतु, विरूपाक्षस्तृप्यतु, सहस्राक्षस्तृप्यतु, सोमः, ब्रह्मा, वेदाः, ऋषयः, सर्वाणि छन्दांसि, ओङ्कारः, वषट्कारः, महाव्याहृतयः, सावित्री, यज्ञाः, द्यावापृथिवी, नक्षत्राणि, अन्तरिक्षम्, अहोरात्राणि, सङ्ख्याः, सन्ध्या, समुद्राः, नद्यः, गिरयः, क्षेत्रौषधिवनस्पतिगन्धर्वाप्सरसः, नागाः, वयांसि, सिद्धाः, साध्याः, विप्राः, यक्षाः, रक्षांसि, भूतान्येवमन्तानि तृप्यन्तु, श्रुतिं तर्पयामि, स्मृतिं तर्पयामि, धृतिं तर्पयामि, रतिं तर्पयामि, गतिं तर्पयामि, श्रद्धामेधे, धारणां च, गाः, ब्राह्मणं, स्थावरं, जङ्गमानि, सर्वभूतानि तृप्यन्तु" इति यज्ञोपवीती । अथ प्राचीनावीती पित्र्यां दिशमीक्षमाणः "शतर्चिनः, माध्यमाः, गृत्समदनः, विश्वामित्रः, जमदग्निः, वामदेवः, अत्रिः, भरद्वाजः, वसिष्ठः, प्रगाथाः, पावमानाः, क्षुद्रसूक्ताः, महासूक्ताः, सुमन्तुः, जैमिनिः, वैशंपायनः, पैलः, सूत्रभाष्यकृतः, गार्ग्यबभ्रुबाभ्रव्यमण्डुमाण्डव्याः, गार्गी, वाचक्नवी, वडवा, प्रातिथेयी, सुलभा, मैत्रेयी, कहोलः, कौषीतकिः, महाकौषीतकिः, सुयज्ञः, शाङ्खायनः, आश्वलायनः, ऐतरेयः, महैतरेयः, भारद्वाजः, जातूकर्ण्यः, पैङ्ग्यः, महापैङ्ग्यः, बाष्कलः, गार्ग्यः, शाकल्यः, माण्डूकेयः, महादमनः, उद्दवाहः, औद्दवाहिः, सौयामिः, शौनकिः, शाकपूणिः, ये चान्ये चाचार्यास्ते सर्वे तृप्यतु" एवं प्रत्येकमुदकाञ्जलिं दत्वा ततः पितृपितामहप्रपितामहनामान्युच्चार्योच्चार्य तर्पणं करोति । तद्यथा "देवदत्तस्तृप्यतु, मित्रसूनिस्तृप्यतु, यज्ञदत्तस्तृप्यतु" इति । ततः "पितृवंशस्तृप्यतु" इत्यञ्जलिं क्षिपेत् । अस्मिन्नवसरे न नग्नां

स्त्रियमीक्षेत इत्येवमाद्याचारः पठितः समस्त एव कर्त्तव्यः। आनुपूर्व्येण प्रयोजनमेव नास्तीति पद्धतिर्न कृता॥

कृषिकरणकर्म वक्ष्यामः। रोहिण्यां हलयोक्त्रकर्णगालवादीनां प्रारम्भे यत्कर्म तदन्येन ब्राह्मणेन कारयितव्यम्। गृहादेव सिद्धं हविष्यमन्नं गृहीत्वा क्षेत्रस्य पुरस्तात् " महीद्यौः पृथिवीचनइमंयज्ञ " मिति मन्त्रेण नमस्कारान्तेन वलिं दत्वा ततो " नमोद्यावापृथिवीभ्यां होतृभ्यां पूर्वसूभ्यां विश्वकर्मणोनूपोमेष्ठमेपातमाहिंसिष्टं मामा सन्ताप्त " मिति प्रतिदिशमुपस्थानं कृत्वा वापयति॥

उदकतरणकर्म वक्ष्यामः। यस्यां दिश्युदकमागच्छति तस्यां दिश्यभिमूखो भूत्वा " सर्वासांपित्रेविश्वकर्मणोमनूहविर्जुषता " मिति जपित्वा ततः " समुद्रायवैणवेनमः स्वाहा, नमोवरुणायधर्मपतयेस्वाहा, सर्वाभ्योनदीभ्यः स्वाहा " इति उदकाञ्जलींस्त्रीनप्सु जुहोति। अथ वा स्थावराय। तत एभिरेव मन्त्रैः सलिलमूर्द्ध्वमुत्क्षिप्य ततः तरेत्। तरन्भयं यदि शङ्केद्वासिष्ठं सूक्तं किञ्चिज्जपित्वा ततः "समुद्रज्येष्ठाः सलिलस्यमध्या" दिति जपेत्। अपरे त्वेवं वर्णयन्ति। " समुद्रजेष्ठा " जपेदिदमेव वासिष्ठमिति॥

श्रावणीकर्म वक्ष्यामः। तच्च श्रवणे पूर्णमास्यां कर्त्तव्यम्। अत्र स्तरणाघाराज्यभागा निर्विकल्पाः। उपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा ततोऽक्षतसक्तूनां स्थालीपाकस्य जुहुयात्। "विष्णवेस्वाहा, श्रावण्यैपौर्णमास्यैस्वाहा, वर्षाभ्यः स्वाहे " ति हुत्वा ततः स्विष्टकृत्ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयमिति॥

सर्पवत्युपकर्म वक्ष्यामः। अत्र स्तरणाघाराज्यभागा निर्विकल्पाः। अस्यामेव पौर्णमास्यां गृहमेव वाह्यतः कृत्वा ततः अक्षतसक्तूंश्च घृतेन मिश्रयित्वा अवदानधर्मेण द्रव्याणां

सर्पाणां पूर्वार्धे जुहोति। "देवेभ्यः समधिपतये स्वाहा, अद्भ्यः स्वाहे"ति पश्चार्द्धेन जुहोति। तत एताभ्यामेव मन्त्राभ्यामधिपतये पुरस्तात्पुरस्तात् सर्पेभ्यः पश्चादेवं षडाहुतीर्हुत्वा ततोनेनैव प्रकारेणान्तरिक्षाणां दिव्यानां पार्थिवानां षट्षडाहुतयो हूयमानाश्चतुर्विंशतिर्भवन्ति। होमानन्तरमग्नेरुत्तरतः प्रागग्रेषु कुशेषूदकुम्भं नवं प्रतिष्ठाप्य ततश्चतुर्ष्वपि स्थानेषु कुशान् भूमौ निधाय ततो "दिव्यानां सर्पाणामधिपतिरवनेनिक्ता"मित्यनेन मन्त्रेणोदकुम्भस्योत्तरतो ये कुशा निहिताः तेषां पूर्वार्द्धे हस्तेनोदकमासिञ्चति। "दिव्याः सर्पाअवनेनिजता" मित्यनेन मन्त्रेण यथोक्तेनाष्टप्रकारेण पश्चार्द्धे आसिञ्चति। अधिपतये पुरस्तात्पुरस्तात्त्रिः सर्पेभ्यः पश्चात्पश्चात्त्रिरेव एवं षड् भवन्ति। एवमुत्तरेष्वपि द्रष्टव्यम्। "दिव्यानां सर्पाणामधिपतिः प्रलिखतां दिव्याः सर्पाः प्रलिखन्ता" मिति फलकेनाप्सु प्रदेशेषूदकनोर्द्धेषु स्पृशति। ततो "दिव्यानां सर्पाणामधिपतिः प्रलिम्पतां सर्पाःदिव्याः प्रलिम्पन्ता"मिति सुगन्धिना विलेपनेन तथैव लिम्पति। "दिव्यानां सर्पाणामधिपतिरावध्नीतां दिव्याः सर्पाआवध्नीता"मिति सुगन्धिपुष्पाणि क्षिपति। "दिव्यानां सर्पाणामधिपतिराच्छादयतांदिव्याः सर्पाआच्छादयन्ता" मिति सूत्रतन्तुमुपहरति। "दिव्यानां सर्पाणामधिपतिराङ्क्तां दिव्याः सर्पाआञ्जता"मिति कुशतरुणेन सौवीरमञ्जनं क्षिपति। "दिव्यानां सर्पाणामधिपतिरीक्षतांदिव्याः सर्पाइक्षन्ता"मिति आदर्शेनैवमवेक्षयति। "दिव्यानां सर्पाणामधिपतिरेष तेबलिर्दिव्याः सर्पाएषवोबलि"रिति हविष्यमन्नं ददाति। उदकदानकंकतवेष्टनवर्णकप्रलिम्पनपुष्पप्रकिरणसूत्रतन्तुप्रक्षेपणाञ्जनादर्शेक्षणबलिदानानि अष्टौ पदार्था दिव्यानां सर्पाणामधिपतीनां दिव्यानां च सर्पाणां षट्कृत्वोभ्यस्यमाना अष्टाचत्वारिंशद्भवन्ति। एकीकृतं द्वि-

नवतं शतं च भवाति। एतत्कृत्वा ततः स्विष्टकृत्ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयमिति। अन्ये त्वेवं व्याचक्षते "दिव्यानांसर्पाणामधिपतयेस्वाहा, दिव्येभ्यः सर्पेभ्यः स्वाहेति" आहुतिद्वयमेव हुत्वा तत उदकुंभपूरणादिवलिदानान्तं कर्त्तव्यम्। चतुर्विंशत्याहुतयो न होतव्या इति। ततोऽनेनैव प्रकारेणाऽक्षतसक्तुभिर्लोकप्रसिद्धेन सर्पेभ्य उदकपूर्वं रात्रौ वाग्यतो बलिहरणं कुर्यात्। पत्नी च वाग्यता बलिमुपसादयेत्। मार्गशीर्षशुक्लचतुर्दशीं यावत् सर्पकर्म येन कृतं स "सुत्रामाणंपृथिवींद्यामनेहस"मित्यनेन मत्रेण शय्यामारोहते। ततश्चतुरो मासान् मंचकशायी स्यादिति॥

आश्वयुजीकर्म वक्ष्यामः। अत्र स्तरणाघाराज्यभागा निर्विकल्पाः। आश्वयुज्यां पौर्णमास्यामुपलेपनोल्लेखनाद्याघाराज्यभागान्तं कृत्वा पायसस्य चरुः "इन्द्रायस्वाहा, अश्विभ्यांस्वाहा, अश्वयुग्भ्यांस्वाहा, आश्वयुज्यैपौर्णमास्यैस्वाहा, अश्वपतयेस्वाहा, पिंगलायस्वाहे" ति षडाहुतीराज्यस्य हुत्वा ततः क्षीरघृतावेकीकृत्य "आगावोअग्म" न्नित्यष्टर्चैः प्रत्यृचमेवमष्टावाहुतीः स्रुवेण हुत्वा ततः समवद्य स्विष्टकृत्ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समाप्य ब्राह्मणान् भोजयेत्। गाश्च सवत्सा एवैतांरात्रिं वासयेत्। अपरे तु व्याचक्षते। घृतमिश्रस्य दघ्न "आगावोअग्म" न्नित्यष्टावाहुतयो होतव्याः॥

आग्रहायणीकर्म वक्ष्यामः। मार्गशीर्षपौर्णमास्यां येनैव कर्मणा सर्पंवत्स्युपकर्म कृतं तेनैवोत्सर्गं कृत्वा ततः "शंनोमित्रः शंवरुणः"इत्यनेन मन्त्रेण पलाशशाखया गृहमध्ये भूम्येकदेशं शोधयित्वा ततः "समुद्रादूर्मिर्मधुमंउदारादि"त्यनेन मन्त्रेणाऽद्भिरभ्युक्ष्य "स्योनापृथिविभवे" त्यनेन मन्त्रेण स्तरणमास्तृणाति। ततो

यः सर्वेषां ज्येष्ठः स दक्षिणतः प्रति "ब्रह्मन्प्रतितिष्ठामि अत्र" इत्यनेन मन्त्रेण वामपार्श्वैः परिवर्त्तते । तत "उदीर्ध्वजीवो आगा" दित्यनेन मन्त्रेणोत्तिष्ठति । ततस्तस्मूरेतां रात्रिं शेरते उपरिष्टात्तु स्वेच्छा इत्येतत्पूर्णमास्यां कृत्वा ततः प्रतिपदि प्रातरेव शमीपलाशमधूकेषीकापामार्गशिरीषोदुम्बरकुशतरुणवदरीणां मुष्टिमादायोदपात्रे हलोत्खातलोष्ठं सहिरण्यं च क्षिप्त्वा ततः "अपनः शोशुचदघ"मित्यष्टाभि ऋग्भिः तस्मिन्नुदपात्रे तां मुष्टिं निषज्य निमज्य प्रदक्षिणगृहेभ्यः पाप्मानं धूमसख्यं पातयेत् । यद्यष्टानां गृहाणामभ्यधिकं गृहं भवति । तत इदमेव सूक्तं पुनः प्रयोक्तव्यम् । एवं सर्वेभ्यो गृहेभ्यः प्रत्यृचं पातयित्वा तत उदपात्रमुत्तरतो गृहस्य निनयेत् । ततः कर्त्ता दधिमधुघृतान्येकीकृत्य दक्षिणा दद्येति । एतत्कृत्वोपलेपनोल्लेखनाद्याघाराज्यभागान्तं करोति । अस्मिन् कर्मणि स्तरणाघाराज्यभागाः पाक्षिकाः । "ग्रीष्मोहेमन्त उतत्रावसन्तः शरद्वर्षाः सुकृतं नो अस्तु तेषामृतूनां शरशारदानां निपात एषामुभयेस्यामस्वाहा, अपश्वेतपदाजहिपूर्वेण चसप्त च परेण च वारुणीरिमाः सर्वाश्वराजबान्धवैः स्वाहा, श्वेतायवैदार्वाय स्वाहेति, वेदार्थाय स्वाहा, तक्षकायवैशेलेयाय स्वाहे"ति आज्यस्य षडाहुतीर्हुत्वा ततः " सुहेमन्तः सुवसन्तः सुग्रीष्मः प्रतिधीयतांसुवर्षा शन्तनोवर्षाः शरदः शंभवन्तुनः"इत्यनेन मन्त्रेणोपस्थानं कृत्वा ततः पाक्षिकः स्विष्टकृत्ततो महाव्याहृतिसर्वप्रायश्चित्तादितन्त्रशेषं समापनीयम् । अपरे तु व्याचक्षते । आग्रहायण्यां पौर्णमास्यां तदेव मधूकादि कृत्वा ततो "ग्रीष्मोहेमन्त" इत्येवमादिकर्त्तव्यं सर्पबलिकर्मणानन्तप्रसवांरादिति एतत्सर्वं पौर्णमास्यां कर्त्तव्यमिति ॥

चित्रकर्म वक्ष्यामः । अत्र स्तरणाघाराज्यभागा निर्विकल्पाः । चैत्र्यां पौर्णमास्यामुपलेपनोल्लेखनादिस्तरणान्तं कृत्वा किन्नरमि-

थुनंक्राश्चीमथुनादीनि यावदुपलभ्यन्ते एतानि सर्वाणि वदरी-पात्रादिमयानि कृत्वा ऐन्द्राग्नी दीर्घदुग्धे लम्बोदरे पुरुषा-कृती कर्त्तव्ये । रौद्रा गोलकास्तु वृत्तास्त्रयः एतत्सर्वं पिष्ट-स्य कृत्वा ततः पूर्ववदाघाराज्यभागान्तं कृत्वाऽवदानधर्मेण ऐ-न्द्राग्नदेवश्चरुः "इन्द्राग्निभ्यां स्वाहे"ति हुत्वा ततश्चरुधर्मेणैव गोलकेभ्योऽवदानधर्मेण समवत्तधान्यां कृत्वा गृहीत्वा "रुद्राय स्वाहे"ति ततः सर्वेभ्योदद्यात्ततः स्विष्टकृत्ततो महाव्याहृतिसर्व-प्रायश्चित्तादितन्त्रशेषं समापनीयमिति ॥

इति अहिच्छत्राविषये कौसुंवरवास्तव्यश्रीवासुदेवकृते सा-ङ्ख्यायनगृह्यसंग्रहे चतुर्थोऽध्यायः समाप्तः ॥

समाप्तोऽयं ग्रन्थः ॥



श्रीगणेशाय नमः ।

# अथ कौषीतकिगृह्यसूत्रम् ।

## हरिः ॐ

अथातः पाकयज्ञान् व्याख्यास्यामोऽभिसमावर्त्स्यमानो य त्रान्त्यां समिधमभ्यादध्यात् तमग्निमिन्धीत वैवाह्यं वादायाद्य काल एके प्रेते वा गृहपतौ स्वयं ज्यायान् वैशाख्याममावास्यायामन्यस्यां वाऽकामतो नक्षत्र एके पुरुपशुविट्कुलाम्बरीषबहुयाजिनामन्यतमस्मादग्निमिन्धीत सायं प्रातरेके सायमाहुतिसंस्कारोऽध्वर्युप्रत्यय इत्याचार्याः । प्रातः पूर्णाहुतिं जुहुयाद्वैष्णव्यर्चा तूष्णीं वा । तस्य प्रादुष्करणहवनकालावग्निहोत्रेण व्याख्यातौ । यज्ञोपवीतीत्यादि च सम्भवत्सर्वम् । कल्पैकत्वात् । तदप्याहुः–

पाकसंस्था हविःसंस्थाः सोमसंस्थास्तथापराः ।
एकविंशतिरित्येता यज्ञसंस्थाः प्रकीर्तिताः ॥ ॥ १ ॥

कर्मापवर्गे ब्राह्मणभोजनम् । वाग्रूपवयःश्रुतशीलवृत्तानि गुणाः ।
श्रुतं तु सर्वानत्येति । न श्रुतमतीयात् ॥
अधिदैवमथाध्यात्ममधियज्ञमिति त्रयम् ।
मन्त्रेषु ब्राह्मणे चैव श्रुतमित्यभिधीयते ॥
क्रियावन्तमधीयानं श्रुतवृद्धं तपस्विनम् ।
भोजयेत् तं सकृद्यस्तु न तं भूयः क्षुदश्नुते ॥
यां तितर्पयिषेत् काञ्चिद्देवतां सर्वकर्मसु ।
तस्या उद्दिश्य मनसा दद्यादेवंविधाय वै ॥
नैवंविधे हविर्न्यस्तं न गच्छेद्देवतां क्वचित् ।
निधिरेष मनुष्याणां देवानां पात्रमुच्यते ॥ ॥ २ ॥

अथ दर्शपूर्णमासाः । उपोष्य प्रातर्यत्रैतन्महावृक्षाऽग्राणि

सूर्ये आतपति स होमकालः स्वस्त्ययनतमः । सर्वासामावृतामन्यत्र निर्देशात् सुमनाः शुचिः शुचौ वरूथ्यदेशे पूर्णविधानं चरुं स्नपयित्वा दर्शपूर्णमासदेवताभ्यो यथाविभागं स्थालीपाकस्य जुहोति । स्थालीपाकेषु च ग्रहणासादनप्रोक्षणानि, मन्त्रदेवताभ्योऽवदानधर्माश्च । पूर्वं तु दर्शपूर्णमासाभ्यामन्वारम्भणीयदेवताभ्यो जुहुयादापौर्णमासादर्शस्यानतीतः काल, आदर्शात् पौर्णमासस्य । प्रातराहुतिं चैके सायमाहुतिकालेऽस्ययाम्मन्यन्ते नियतस्त्वेव कालोऽग्निहोत्रे प्रायश्चित्तदर्शनाद् भिन्नकालस्य नित्याहुत्योर्व्रीहियवतन्दुलानामन्यतमद्धविः कुर्वीताभावेऽन्यदप्रतिषिद्धम् । तन्दुलांश्चेन प्रक्षाल्यैक इतरेषामसंस्कारः । सायमग्नये प्रातस्सूर्याय प्रजापतये चानुभयांस्तूष्णीं प्राक् प्रागाहुते समिधमेके यथोक्तं पर्युक्षणम् ॥ ३ ॥

उत्थाय प्रातराचम्याहरहः स्वाध्यायमधीयीताद्या नो देव सवितरिति द्वे, अपेहि मनसस्पत इति सूक्तम्, ऋतं च सत्यं चेति सूक्तमादित्या अवहिरूयतेति सूक्तशेषः, इन्द्रश्रेष्ठानीत्येकाहंसः शुचिषदित्येका, नमो महद्भ्य इत्येका, यत इन्द्र भयामह इत्येका धन्वसस्येत्येका, यो मे राजन्नित्येका, ममाग्ने वर्च इति सूक्तं, स्वस्ति नो मिमीतामिति च पञ्च ॥ ४ ॥

चत्वारः पाकयज्ञा हुतोऽहुतः प्रहुतः प्राशित इति पञ्चसु बहिः शालायां विवाहे चूडाकरण उपनयने केशान्ते सीमन्तोन्नयन इत्यमलिप्त उद्धृतावोक्षितेऽग्निं प्रणीय निर्मथ्यैके विवाह उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्यै पाणिं गृह्णीयाद्या लक्षणसंपन्ना स्याद् । यस्या अभ्यात्मपङ्गानि स्युः । समाः केशान्ताः आवर्तावपि यस्यै स्यातां प्रदक्षिणौ ग्रीवायां षड् वीराञ्जनयिष्यतीति विद्यात् ॥ ५ ॥

जायामुपग्रहीष्यमाणोऽनृक्षरा इति वरकान् गच्छेत्ताऽनुम-न्त्रयतेऽभिगमने पुष्पफलयवानादायोदकुम्भं चायमहं भो ३ इति त्रिः प्रोच्योदिते प्राङ्मुखा गृह्या प्रत्यङ्मुखा आवहमाना गोत्र-नामान्यनुकीर्तयन्तः कन्या वरयन्त्युभयतो रुचिते पूर्णपात्रीमभि-मृशन्ति पुष्पाक्षतफलयवहिरण्यमिश्राम् । अनाधृष्टमस्यनाधृष्यं देवानामोजोऽनभिशस्त्यभिशस्तिपाः । अनभिशस्तेऽन्यमञ्जसा सत्य-मुपगेषं सुविते मा धा इत्यानः प्रजामिति कन्याया आचार्य उत्थाय मूर्द्धनि करोति प्रजां त्वयि दधामि पशूँस्त्वयि दधामि तेजो ब्रह्म-वर्चसं त्वयि दधामीति ॥ ६ ॥

प्रतिश्रुते जुहोति चतुरस्रं गोमयेन स्थण्डिलमुपलिप्य पूर्वयो-र्दिशोर्दक्षिणां प्राचीं पित्र्य उत्तरां दैवे प्राचीमेवैक उदक्संस्थां मध्ये लेखां लिखित्वा तस्यै दक्षिणत उपरिष्टादूर्ध्वामेकां मध्य ए-कामुत्तरत एकां ता अभ्युक्ष्याग्निं प्रणीयाभिमनसा. शिवेनाऽयम-स्तु सङ्गमनो वसूनां मा नो हिंसीः स्थविरं मा कुमारं शन्नो भव द्विपदे शं चतुष्पद इत्यग्निं प्रणीय तूष्णीं वा प्रदक्षिणमग्नेः सम-न्तात् पाणिना सोदकेन त्रिः प्रमार्ष्टि तत्समूहनमित्याचक्षते सकृ-दपसव्यं पित्र्ये ॥ ७ ॥

अथ परिस्तरणम् । प्रागग्रैः कुशैः परिस्तृणाति त्रिवृत् पञ्चवृ-द्वा पुरस्तात् प्रथममथ पश्चान्मूलान्यग्रैः प्रच्छादयति । सर्वाश्चावृतो दक्षिणतः प्रवृत्तय उदक्संस्था भवन्ति दक्षिणतो ब्रह्माणं प्रतिष्ठा-प्य भूर्भुवः स्वरिति सुमनोभिरलंकृत्योत्तरतः प्रणीताः प्रणीय, को वः प्रणयतीति सव्येन कुशानादाय दक्षिणेनापनौति । दक्षिणं जान्वाच्य सव्यं पित्र्येनाज्याहुतिषु नित्यं परिस्तरणं नित्याहुतिषु चेति माण्डूकेयः कुशतरुणे अविषमे अविच्छिन्नाग्रे अनन्तर्गर्भे प्रा-देशेन मापयित्वा कुशेन छिनत्ति पवित्रे स्थ इति द्वे त्रीणि वा भ-

वन्ति प्रागग्रे धारयन् वैष्णव्याविव्यभ्युक्ष्य कुशतरणाभ्यां प्रदक्षिणमग्निं त्रिः पर्युक्ष्य,महीनां पयोऽसीत्याज्यस्थालीमादायेषे त्वेत्याधिश्रित्योर्जे त्वेत्युदगुद्वास्योदगग्रे पवित्रे धारयन्नङ्गुष्ठाभ्यां चोपकनिष्ठकाभ्यां चोभयतः प्रतिगृह्योर्ध्वाग्रे प्रह्वे कृत्वाऽऽज्ये प्रत्यस्यति । सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरित्याज्यसंस्कारः सर्वत्र । नासंस्कृतेन जुहुयात् स्रुवे चापः सवितुर्व इति ताः प्रणीताः प्रोक्षणीश्च ॥ ८ ॥

स्रुवः पात्रमर्थलक्षणग्रहणम् । सव्येन कुशानादाय दक्षिणेन मूले स्रुवं विष्णोर्हस्तोऽसीति स्रुवेणाज्याहुतीर्जुहोत्युत्तरपश्चार्द्धादग्नेरारभ्याविच्छिन्नं दक्षिणतो जुहोति, त्वमग्ने प्रमतिरिति दक्षिणपश्चार्द्धादग्नेरारभ्याविच्छिन्नमुत्तरतो जुहोति यस्येमे हिमवन्त इत्याग्नेयमुत्तरमाज्यभागं सौम्यं दक्षिणं मध्येऽन्याहुतयोऽग्निर्जनिता स मेऽमूं जायां ददातु स्वाहा, सोमो जनिमान्त्स माऽमुया जनिमन्तं करोतु स्वाहा, पूषा ज्ञातिमान्त्स माऽमुष्यै पित्रा मात्रा भ्रातृभिर्ज्ञातिमन्तं करोतु स्वाहेति । नाज्याहुतिषु नित्यावाज्यभागौ स्विष्टकृच्च नित्याहुतिषु चेति माण्डूकेया महाव्याहृतिसर्वप्रायश्चित्तप्राजापत्यान्तरमेतदावापस्थानमाज्ये हविषि सव्ये पाणौ ये कुशास्तान् दक्षिणेनाग्रे संगृह्य मूले सव्येन तेषामग्रं स्रुवे समनक्ति मध्यमाज्यस्थाल्यां मूलं चाथ चेत् स्थालीपाकेषु स्रुच्यग्रं मध्यं स्रुवे मूलमाज्यस्थाल्यांताननुप्रहृत्याग्नेर्वासोऽसीति तिस्रः समिधोऽभ्याधाय यथोक्तं पर्युक्षणमनाम्नातमन्त्रास्वादिष्टदेवतास्वमुष्यै स्वाहाऽमुष्यै स्वाहेति जुहुयात् स्वाहाकारेण शुद्धेन व्याख्यातः प्रतिश्रुते होमकल्पः ॥ ९ ॥

प्रकृतिर्भूतिकर्मणां सर्वासां चाज्याहुतीनां शाखापशूनां चरुपाकयज्ञानां च । त एते प्रयाजा अननुयाजा अनिका अनिगदा

असामिधेनीकाश्च सर्वे पाकयज्ञा भवन्ति । तदपि श्लोकाः—

हुतोऽग्निहोत्रहोमेणाहुतो बलिकर्म्मणा ।
प्रहुतः पितृकर्म्मणा प्राशितो ब्राह्मणे हुतः ॥
अनूर्ध्वज्ञु र्व्यूढ़जानुर्जुहुयात् सर्वदा हविः ।
न हि बाह्यहुतं देवाः प्रतिगृह्णन्ति कर्हि चित् ॥
रौद्रं तु राक्षसं पित्र्यमासुरं चाभिचारिकम् ।
उक्त्वा मन्त्रं स्पृशेदप आलभ्यात्मानमेव च ॥ ॥१०॥

अथैतां रात्रीं श्वस्तृतीयां वा कन्यां वक्ष्यन्तीति तस्यां रात्र्यामतीते निशाकाले सर्वौषधिफलोत्तमैः सुरभिमिश्रैः सशिरस्कां कन्यामाप्लाव्य रक्तमहतं वा वासः परिधाय पश्चादग्नेः कन्यामुपवेश्यान्वारब्धायां महाव्याहृतिभिर्हुत्वाऽऽज्याहुतीर्जुहोत्यग्नये सोमाय प्रजापतये मित्राय वरुणायेन्द्रायेन्द्राण्यै गन्धर्वाय भगाय पूष्णे त्वष्ट्रे बृहस्पतये राज्ञे प्रत्यनीकायेति । चतस्रोऽष्टौ वाऽविधवाः शाकपिण्डीभिः सुरयाऽन्नेन च तर्पयित्वा चतुरो नर्तनं कुर्युरेता एव देवताः पुंसो वैश्रवणमीशानं चातो ब्राह्मणभोजनम् ॥ ११॥

स्नातं कृतमङ्गलं वरमविधवाः सुभगा युवत्यः कुमार्य्यै वेश्म प्रपादयन्ति । तासामप्रतिकूलः स्यादन्यत्राभक्ष्यपातकेभ्यस्ताभिरनुज्ञातोऽथास्यै वासः प्रयच्छति । रैभ्यासीदिति चित्तिरा उपवर्णमित्याञ्जनकोशमादत्ते । समञ्जन्तु विश्वेदेवा इति समञ्जनीया । यथेयं शची वा वातां सुपुत्रां च यथाऽदितिम् । अविधवां चापालामेवं त्वामिह रक्षतादिममिति दक्षिणे पाणौ शलली त्रिवृतं ददाति रूपं रूपामिदर्श सव्येरक्तकृष्णमाविकं क्षौमं वा त्रिमणिं प्रतिसरं ज्ञातयोऽस्या बध्नन्ति। नीललोहितमिति। मधुमतीरोषधीरिति मधूकानि बध्नाति । विवाहे गामर्हयित्वा गृहेषु गां ते माधुपर्कि-

क्यौ पश्चादग्नेः कन्यामुपवेश्यान्वारब्धायां महाव्याहृतिभिस्ति-स्रो जुहोति समस्ताभिश्चतुर्थीं प्रति येतैतस्यां चोदनायामेवमना-देशे सर्वेषु भूतिकर्मसु पुरस्ताच्चोपरिष्टाच्चैताभिरेव जुहुयात् ॥१२॥

सम्राज्ञी श्वसुरे भवेति पिता भ्राता वास्यग्रेण मूर्द्धनि जुहोति स्रुवेण वा तिष्ठन्नासीनायाः प्राङ्मुख्याः प्रत्यङ्मुखो, गृभ्णामि ते सौभगत्वाय हस्तमिति दक्षिणेन पाणिना दक्षिणं पाणिं गृह्णाति साङ्गुष्ठमुत्तानेनोत्तानं तिष्ठन्नासीनायाः प्राङ्मुख्याः प्रत्यङ्मुखः पञ्च चोत्तरा जपित्वा, अमोहमस्मि सा त्वं सा त्वमस्यऽमोहं, द्यौरहं पृथिवी त्वमृक्कमसि सामाहं सा मामनुव्रता भव तावेह विवहावहै प्रजां प्रजनयावहै पुत्रान् विन्दावहै बहूंस्ते सन्तु जरदष्टय इत्युदकुम्भमव्रवं भूर्भुवः स्वरिति पूरयित्वा पुन्नाम्नो वृक्षस्य सक्षीरान्त्सपलाशान्त्सकुशानोप्य हिरण्यमिति चैके, तं ब्रह्मचारिणे वाग्यताय प्रदाय सागुदीच्यां दिशि ता स्थेयाः प्रदक्षिणा भवन्त्यश्मानं चोत्तरत उपस्थाप्ये हि सूनरीप्युत्थाप्या एह्यश्मानमातिष्ठाश्मेव त्वं स्थिरा भव अभितिष्ठ प्रतन्यतः सहस्व पृतनायतदतिदक्षिणेन प्रपदेनाश्मानमाक्रमय्य प्रदक्षिणमग्निं पर्याणीय तेनैव मन्त्रेण द्वितीये वसनं प्रदाय लाजाञ्च्छमीपलाशमिश्रान् पिता भ्राता वास्यादञ्जलावावपत्युपस्तरणाभिघारणं प्रत्यभिघारणं चाज्येन ताञ्जुहोति ॥ १३ ॥

इयन्नार्युपब्रूते लाजानावपन्तिका शिवा ज्ञातिभ्यो भूयासं चिरं जीवतु मे पतिः स्वाहेति तिष्ठन्ती जुहोति । पतिर्मन्त्रं जपत्यऽश्मक्रमणाद्येवं द्वितीयमेवं तृतीयं तूष्णीं कामेन चतुर्थं प्रागुदीच्यां दिशि सप्तपदानि प्रक्रमयतीष एकपद्यूर्जे द्विपदी रायस्पोषाय त्रिपद्यायोभव्याय चतुष्पदी पशुभ्यः पञ्चपदृतुभ्यः षट्पदी सखा सप्तपदी भवेति । तान्यद्भिः शमयत्यापोहिष्ठीयाभिस्तिसृभिः स्थे-

याभिरद्भिर्मार्जयित्वा मूर्द्धन्यभिषिच्य गां ददानीत्याह ब्राह्मणेभ्यः किञ्चिद्दद्यात् सर्वत्र स्थालीपाकादिषु कर्मसु मूर्या विदुषेत्राधूर्य गौर्ब्राह्मणस्य वरो ग्रामो राजन्यस्याऽश्वो वैश्यस्याऽधिरथं शतं दुहितृमते याज्ञिकेभ्योऽश्वं ददाति ॥ १४ ॥

प्र त्वा मुञ्चामीति तृचं गृहान् प्रतितिष्ठमानायां जीवं रुदन्तीति प्ररुदन्त्यामथ रथाक्षस्थोयाञ्जनं पत्नी कुरुतेऽक्षन्नमीमदन्तेत्येतेनया सर्पिषा शुची ते चक्रे द्वे ते चक्रे इति चैताभ्या चक्रयोः पूर्वया पूर्वमुत्तरयोत्तरमुस्रौ च खे रथस्येत्येतया फलवतो वृक्षस्य शम्या गर्तेष्वेकैकां वयाञ्चिखाय नित्या त्राभिमन्त्र्याथोस्रौ युञ्जन्ति । युक्तस्ते अस्तु दक्षिण इति द्वाभ्यां शुक्रावनड्वाहावित्येतेनार्द्धर्चेन युक्तावभिमन्त्र्याथ यदि रथाङ्गं विशीर्येत छिद्येत वाहिताग्ने गृहान् कन्यां प्रपाद्याभिव्यवमन्त्र खदिरस्येत्येतया परिदध्यात्यंचिदश्नमिति ग्रन्थिं स्वस्ति नो मिमीतामिति पञ्चर्चं जपति शुकिं शुकमिति रथमारोहन्त्यामा विदन् परिपन्थिन इति चतुष्पथे, ये वध्व इति श्मशाने, वनस्पते शतवल्श इति वनस्पतावर्द्धर्चं जपति, सुत्रामाणमिति नावमारोहन्त्यामश्मन्वतीति नदीं तरन्त्यामपि वा युक्तेनैवोर्ईऊर्मिरित्यगाधे प्रेक्षणं चेह प्रियमिति सप्तगृहान् प्राप्तायाः कृताः परिहाप्य ॥ १५ ॥

आनडुहमित्युक्तं तस्मिन्नुपवेश्यान्वारब्धायां पतिश्चतस्रो जुहोत्याग्निना देवेन पृथिवीलोकेन लोकानामृग्वेदेन वेदानां तेन त्वा शमयाम्यसौ स्वाहा, वायुना देवेनान्तरिक्षलोकेन लोकानां यजुर्वेदेन वेदानां तेन त्वा शमयाम्यसौ स्वाहा, सूर्येण देवेन द्यौर्लोकेन लोकानां सामवेदेन वेदानां तेन त्वा शमयाम्यसौ स्वाहा, चन्द्रेण देवेन दिशां लोकेन लोकानां ब्रह्मवेदेन वेदानां तेन त्वा शमयाम्यसौ स्वाहा भूर्या ते पतिघ्न्यलक्ष्मी देवरघ्नी जारघ्नी ता

करोम्यसौ स्वाहेति वा प्रथमया महाव्याहृत्या प्रथमोपहिता द्वितीयया द्वितीया तृतीयया तृतीया समस्ताभिश्चतुर्थी घोरचक्षुरित्याज्यलेपन चक्षुषी विमृजीत, कयानश्चित्र इति तिसृभिः केशान्तानभिमृश्योतत्यादैव्याभिषजेतिचतस्रोऽनुद्रुत्यान्ते स्वाहाकारेण मूर्द्धनि संस्त्रावमत्र हैके कुमारमुत्सङ्गमानयन्त्युभयतः सुजात मा ते योनिमित्येतयाऽपि वा तूष्णीं तस्याऽञ्जलौ फलानि दत्वा पुण्याहं वाचयति पुंसवतीह भवतीहैवस्तामिति सूक्तशेषेण गृहान् प्रपादयन्ति ॥ १६ ॥

दधिक्राव्णोअकारिषमिति दधि संपिबेयातां वाग्यतावासीयातामाध्रुवदर्शनादस्तमिते ध्रुवं दर्शयति ध्रुवैधि पोष्यामयीति, ध्रुवं पश्यामि प्रजां विदेयेति ब्रूयात् त्रिरात्रं ब्रह्मचर्यं चरेयातामधः शयीयातां दध्योदनं संभुञ्जीयातां पिबतं च तृप्णुतं चेति तृचेन सायं प्रातर्वैवाहमग्निं परिचरेयातामग्नये स्वाहाऽग्नये स्विष्टकृते स्वाहेति. पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ पुमानिन्द्रश्चाग्निश्च पुमांसं वर्ततां मयि स्वाहेति पूर्वा गर्भकामा दशरात्रमविप्रवासः॥१७॥

अथ चतुर्थीकर्म । त्रिरात्रे निर्वृत्ते स्थालीपाकस्य जुहोति, अग्ने प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि यास्या पतिघ्नी तनूस्तामस्या अपजाहि। वायो प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि यास्या अपुत्रिया तनूस्तामस्या अपजाहि । सूर्य प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि यास्या अपशव्या तनूस्तामस्या अपजहि । अर्यमणं नु देवं कन्या अग्निमयक्षत सेमां देवो अर्य्यमा प्रेतो मुञ्चातु मामुतः । वरुणं नु देवं कन्या अग्निमयच्छत सेमां देवो वरुणः प्रेतो मुञ्चातुमामुतः । पूषणं नु देवं कन्या अग्निमयच्छत सेमां देवो पूषा प्रेतो मुञ्चातु मामुतः। प्रजायत इति सप्तमी, सौविष्टकृत्यष्टमी ॥ १८ ॥

अध्याण्डामूलं पेषयित्वर्तुवेलायां, मुदीर्ष्वातः पतिवतीति द्वाभ्यामन्ते स्वाहाकाराभ्यां नस्तो दक्षिणतो निषिञ्चेत् । गन्धर्वस्य विश्वावसोर्मुखमसीत्युपस्थम् अञ्जनयिष्यमाणोऽभिमृशेत् । समाप्ते अर्थे जपेत् । प्राणे तत्रे रेतो दधाम्यसावित्यनुप्राण्यात् । यथा भूमिरग्निगर्भा यथा द्यौरिन्द्रे गर्भिणी वायुर्यथा दिशां गर्भ एवं गर्भं दधामि तेऽसाविति वा । आ ते योनिं गर्भ एतु पुमान् बाण इवेषुधिम् आवीरो अत्र जायतां पुत्रस्ते दशमास्यः । पुमांसं पुत्रं जनयतं पुमाननुजायतां तेषां माता भविष्यसि जातानां जनयांसि च पुंसि वै पुरुषे रेतस्तत्स्त्रियामनूंषि च तु तथा तदब्रवीद्धाता तत्प्रजापतिरब्रवीत् । प्रजापतिर्व्यदधात् सविता व्यकल्पयत् । स्त्रीषूयमन्यात् स्वादधत्पुमांसमादधादिह । यानि भद्राणि बीजानि पुरुषा जनयन्ति नः तेभिष्टं पुत्रं जनय सुप्रसूर्धेनुका भव । अभिक्रन्द वीलय स्वगर्भमाधेहि साधय वृषाणं वृषन्नाधेहि प्रजायै त्वा हुवामहे । यस्य योनिं पतिरेतोगृभाय पुमान् पुत्रो धीयतां गर्भे अन्तः तं पिपृहि दशमास्योन्तरुदरे स जायताम् । श्रेष्ठ्यतमस्त्वानामिति वा ॥ १९ ॥

तृतीये मासि पुंसवनं पुष्येण श्रवणेन वा सोमांशुं पेषयित्वा कुशकण्टकं वा न्यग्रोधस्य वा स्कन्धस्यान्त्यां शुङ्गां यूपस्य वाऽग्निष्ठां संस्थिते वा यज्ञे जुव्हः संस्रावमग्निना रयिं तन्नस्तुरीयं समिद्धाग्निर्वनवत्पिशङ्गरूप इति चतसृभिरन्ते स्वाहाकाराभिर्नस्तो दक्षिणतो निषिञ्चेत् ॥ २० ॥

चतुर्थे मासि गर्भरक्षणम् । ब्रह्मणाग्निः संविदान इति षट् स्थालीपाकस्य हुत्वाऽक्षीभ्यां ते नासिकाभ्यामिति प्रत्यृचमाज्यलेपेनाङ्गान्यनुविमृज्य ॥ २१ ॥

सप्तमे मासि प्रथमगर्भे सीमन्तोन्नयनम् । स्नातामहतवाससं

पश्चादग्नेरुपवेश्यानारब्धायां महाव्याहृतिभिर्हुत्वा स्थालीपाकं श्र-पयित्वा मुद्गौदनमित्येके पुंवदुपकरणानि स्युर्नक्षत्रं च धाता द-दातु दाशुषे प्राचीं जीवातुमक्षितिं वयं देवस्य धीमहि सुमतिं सत्यधर्मणः धाता प्रजाया उत्तराय ईशे धातेदं विश्वं भुवनं जजान धाता पुत्रं यजमानाय दाता तस्मा उ हव्यं घृतवज्जुहोतेति नेजे-मेष परापतेति तिस्रः प्रजापत इति षष्ठी त्रिः श्वेतया शलल्या दर्भ-सूच्या चोदुम्बरशलाटुभिः सह मध्यादूर्ध्वं सीमन्तमुन्नयति भूर्भुवः स्वरित्युत्सङ्गे निधाय त्रिवृतिः प्रतिमुच्य कण्ठे बध्नात्ययमूर्जावतो-वृक्ष ऊर्जीव फलिनी भवेत्याथाह वीणागाथिनो राजानं संगायतेति यो वाप्यन्यो वीरतर इत्युदपात्रेऽक्षतानवनिनीय विष्णुर्योनिं क-ल्पयतु एकामहमिति षड्ऋचेन पाययेदथास्या उदरमभिमृशेत् सु-पर्णोऽसि गरुत्माँस्त्रिवृत्ते शिरो गायत्रं चक्षुः छन्दांस्यङ्गानि यजूँ-षि नाम साम ते तनूः मोदमानीं गापयेन्महादेहमतीं वा ऋषभो दक्षिणा ॥ २२ ॥

काकातन्या मचकचातन्याः कोशातक्या बृहत्याः कालकीत-कस्येति मूलानि पेषयित्वोपलेपयेद्देशं यस्मिन् प्रजायेत रक्षसा-मपहत्यै ॥ २३ ॥

अथ जातकर्म । जातं कुमारं त्रिरभ्य वान्यानुप्राण्यादृचा प्रा-णिहि यजुषा समश्निहि साम्नोदनीहीति । सर्पिर्मधुनी दध्युदके च संनिनीय व्रीहियवौ वा संनिघृष्य त्रिः प्राशयेज्जातरूपेण प्र ते यच्छामि मधुमन्मखाय वेदं प्रसूतं सवित्रा मघोना आयुष्मान् गुपितोम देवताभिः शतं जीव शरदो लोके अस्मिन्नित्यसाविति नामास्य दधाति घोषवदाद्यन्तरन्तःस्थं द्व्यक्षरं चतुरक्षरं वाऽपि वा षळक्षरं कृतं कुर्यान्न तद्धितम् । तदस्य पिता माता च विद्यातां दशम्यां व्यावहारिकं ब्राह्मणजुष्टं गोः कृष्णस्य शुक्लकृष्णानि

लोहितानि च रोमाणि मखं कारयित्वैतस्मिन्नेव चतुष्टये सन्निनीय चतुः प्राशयेदिति माण्डूकेयो भूर्ऋग्वेदं त्वयि दधाम्यसौ स्वाहा भुवः स्वर्वाकोवाक्यमितिहासपुराणमों सर्वान् वेदाँस्त्वयि दधाम्यऽसौ स्वाहेति वा । मेधाजननम् । दक्षिणे कर्णे वागिति त्रिः । वाग् देवी मनसा संविदाना प्राणेन वत्सेन, भुवो यजुर्वेदं त्वयि दधाम्यसौ स्वाहा स्वः सामवेदं त्वयि दधाम्यसौ स्वाहेति प्रोक्ता जुषतां त्वा सौमनसाय देवी मही मन्द्रावाणी ब्रणीचीः सलिला स्वयम्भूरिति चानुमन्त्रयेत शणसूत्रेण विग्रथ्य जातरूपं दक्षिणे पाणावपिनह्योत्थानादूर्ध्वं दशम्या ब्राह्मणेभ्यो दद्यादमा वा कुर्वीत ॥ २४ ॥

दशरात्रे चोत्थानादूर्ध्वं मातापितरौ शिरःस्नातावहतवाससौ कुमारश्चैतस्मिन्नेव सूतिकाग्नौ स्थालीपाकं श्रपयित्वा जन्मतिथिं हुत्वा त्रीणि च भानि सदैवतानि तन्मध्ये जुहुयाद्यस्मिन् जातः स्यात् पूर्वं तु दैवतं सर्वत्रा आयुष्टे अद्य गीर्भिरयमग्निर्वरेण्यः आयुर्नो देहि जीवसे आयुर्दा हविषा दधानो घृतप्रतीको घृतयोनिरेधि घृतं पीत्वा मधुचारु गव्यं पितेव पुत्रमिह रक्षतादिममिति । सोम महे भगमिति दशमीस्थालीपाकस्य नामधेयं प्रकाशं कृत्वा ब्राह्मणान् स्वस्ति वाच्यैवमेव मासि मासि जन्मतिथिं हुत्वोर्द्ध्वं संवत्सराद् गृह्येऽग्नौ जुहोति ॥ २५ ॥

अग्नये कृत्तिकाभ्यः प्रजापतये रोहिण्यै सोमाय मृगशिरसे रुद्रायार्द्राभ्योदितये पुनर्वसुभ्यां बृहस्पतये पुष्याय सर्प्पेभ्यो श्लेषाभ्यः पितृभ्यो मघाभ्योगभगाय फाल्गुनीभ्यामर्यम्णे फल्गुनीभ्यां सवित्रे हस्ताय त्वष्ट्रे चित्रायै वायवे स्वातय इन्द्राग्निभ्यां विशाखाभ्यां मित्रायानुराधाया इन्द्राय ज्येष्ठायै निर्ऋत्यै मूलायाऽद्भ्योऽषाढाभ्यो ब्राह्मणेऽभिजिते विष्णवे श्रवणाय वसुभ्यो धनिष्ठाभ्यो वरुणाय शतभिषजेऽजायैकपदे प्रोष्ठपदाभ्योऽहिर्बु-

ध्न्याय प्रोष्ठपदाभ्यः पूष्णे रेवत्या अश्विभ्यामश्विनीभ्यां यमाय भरणीभ्यः ॥ २६ ॥

षष्ठे मास्यन्नप्राशनम् । आजमन्नाद्यकामस्तैत्तिरं ब्रह्मवर्चसकामो मात्स्यं जवनकामो घृतौदनं तेजस्कामो दधिमधुघृतमिश्रमन्नं प्राशयेत् । अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः प्रप्रदातारं तारिष ऊर्ज्जन्नो धेहि द्विपदे चतुष्पदे यश्चिद्धि महश्चित् । इममग्न आयुषे वर्चसे तिग्ममोजो वरुणसोमराजन् मातेवास्मा अदितिः शर्मयं सद्विश्वेदेवा जरदष्टिर्यथा सदिति हुत्वाऽग्न आयूँषीत्यभिमन्त्र्योदगग्रेषु केशेषु, स्योना पृथिवि भवेत्युपवेश्य, महाव्याहृतिभिः प्राशनं शेषं माता प्राश्नीयात् ॥ २७ ॥

संवत्सरे चूडाकर्म तृतीये वा वर्षे, पञ्चमे क्षत्रियस्य, सप्तमे वैश्यस्याग्निमुपसमाधाय व्रीहियवानां तिलमाषाणामिति पात्राणि च पूरयित्वानडुहं च गोमयं कुशभित्तं च केशप्रतिग्रहणादर्शन्नवनीतं लोहक्षुरं चोत्तरत उपस्थाप्य संपृच्यध्वम् ऋतावरीरूर्मिणा मधुमत्तमाः पृञ्चती मधुना पयो मन्द्रा धनस्य सातय इत्युष्णास्वप्सुशीता आसिञ्चति । आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषमगस्त्यस्य त्र्यायुषं यद्देवानाम् त्र्यायुषं तत्ते करोमि त्र्यायुषमित्यसाविति शीतोष्णाभिरद्भिर्दक्षिणं केशपक्षं त्रिरभ्यनक्ति शलल्यैके विजटान् वा कृत्वा नवनीतेनाभ्यज्यौ ओषधे त्रायस्वैनमिति कुशतरुणमन्तर्दधाति केशान् कुशतरुणं चादर्शेन संस्पृश्य, तेजोऽसि स्वधितिष्ठेयिता मैनं हिंसीरिति लोहक्षुरमादत्ते । येनावपत् सविता श्मश्रुग्रे क्षुरेण राज्ञो वरुणस्य विद्वान् येन धाता बृहस्पतिरिन्द्रस्य चावपच्छिरः तेन ब्रह्माणो वपतेदमद्यायुष्मान् दीर्घायुरयमस्तु वीरोऽसाविति केशाग्राणि छिनत्ति कुशतरुणं चैवं द्वितीयमेवं तृतीयमेवं

द्विरुत्तरतो निकक्षयोः षष्ठे सप्तमे गोदानकर्मण्येतदेव गोदानकर्म यच्चूडाकर्म षोडशे वर्षेऽष्टादशे वा तृतीये तु प्रवपने गां ददात्यहतं च वासस्तूष्णीमावृतः कन्यानां प्रागुदीच्यां दिशि बह्वौषधिके देशेऽपां वा समीपे केशान्निखनन्ति नापिताय धान्यपात्राणि नापिताय धान्यपात्राणि ॥ २८ ॥ इति प्रथमोऽध्यायः ॥

ॐ गर्भाष्टमेषु ब्राह्मणमुपनयतैणेयेनाजिनेन गर्भदशमेषु वा गर्भैकादशेषु क्षत्रियं रौरवेण गर्भद्वादशेषु वैश्यं गव्येनाषोडशाद् वर्षाद् ब्राह्मणस्यानतीतः काल आद्वाविंशात् क्षत्रियस्यात ऊर्ध्वं पतितसावित्रीका भवन्ति । नैनानुपनयेयुर्नाध्यापयेयुर्न याजयेयुर्नैभिर्व्यवहरेयुरहतेन वा सर्वान्मेखलिनो मौञ्जी मेखला ब्राह्मणस्य धनुर्ज्या क्षत्रियस्योर्णासूत्री वैश्यस्य, पालाशो बैल्वो वा दण्डो ब्राह्मणस्य नैयग्रोधः क्षत्रियस्यौदुम्बरो वैश्यस्य, प्राणसंमितो ब्राह्मणस्य ललाटसंमितः क्षत्रियस्य केशसंमितो वैश्यस्य । सर्वे वा सर्वेषाम् । येनाबद्धेनोपनयेताचार्याधीनं तत्परिवाप्योपनेयस्यादाप्लुत्यालङ्कृत्य जघनेनाग्निं तिष्ठतः प्राङ्मुख आचार्यस्तिष्ठँस्तिष्ठन्तमुपनयम् ॥ १ ॥

इयं दुरुक्तात् परिबाधमाना वर्णं पवित्रं पुनती न आगात् प्राणापानाभ्यां बलमाविशन्ती सखा देवी सुभगा मेखलेयमिति त्रिर्मेखलां प्रदक्षिणं त्रिः परिवेष्ट्य ग्रन्थिरेकस्त्रयोऽपि वाऽपिवा पञ्च यज्ञोपवीतं कृत्वा यज्ञोपवीतमसि यज्ञस्य त्वेनोपनह्यामीत्यञ्जली पूरयित्वाथैनमाह को नामासीत्यसावहं भो इतीतरः समानाऽऽर्षेय इत्याचार्यः समानार्षेयोऽहं भो इतीतरो ब्रह्मचारी भवान् ब्रूहीति ब्रह्मचार्यहं भो इतीतरो भूर्भुवःस्वरित्यस्याञ्जलावञ्जलींस्त्रीन् आसिच्य दक्षिणोत्तराभ्यां पाणिभ्यां पाणी संगृह्य जपति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामुपनयाम्य-

ऽसाविति गणानां त्वेति गणकामानागन्तामारिषण्यतेतियोधान्महा-व्याहृतिभिर्व्याधितान् ॥ २ ॥

भगस्ते हस्तमग्रहीत् सविता हस्तमग्रहीत् पूषा ते हस्तम-ग्रभीदर्यमा हस्तमग्रभीन्मित्रस्त्वमसि धर्मणाऽग्निराचार्य्यस्तव अ-सावहं चोभावग्न एतं ते ब्रह्मचारिणं परिददामीन्द्रैतत्ते ब्रह्म-चारिणं परिददामि विश्वेदेवा एतं वो ब्रह्मचारिणं परिददामि दीर्घायुत्वाय सुप्रजास्त्वाय सुवीर्याय रायस्पोषाय सर्वेषां वेदाना-माधिपत्याय सुश्लोक्याय स्वस्तये ऐन्द्रीमावृतमावर्त आदित्यस्या-वृतमन्वावर्त इति दक्षिणं बाहुमन्वावृत्त्य दक्षिणेन प्रादेशेन दक्षिण-मंसमन्ववहृत्यारिष्यतस्ते हृदयस्य प्रियो भूयासमिति हृदयदेश-मभिमृशति तूष्णीं प्रसव्यं पर्यावृत्याथास्योर्ध्वाङ्गुलिं पाणिं हृदये निधाय जपति ॥ ३ ॥

मम व्रते हृदयं ते दधामि मम चित्तमनुचित्तं ते अस्तु मम वा-चमेकमना जुषस्व बृहस्पतिष्ट्वानि युनक्तु मह्यमिति कामस्य ब्रह्म-वर्चस्यासाविति तेनैव मन्त्रेण तथैव पर्यावृत्त्य दक्षिणेन प्रादेशेन दक्षिणमंसमन्वारभ्य जपति ब्रह्मचार्यसि समिधमाधेह्यपोशानकर्म-कुरुमादिवा वाचं यच्छासमिदाधानादेषा ते अग्ने समिदित्यभ्या-दधाति समिधं तूष्णीं वा ॥ ४ ॥

संवत्सरे सावित्रीमन्वाह त्रिरात्रे अन्वक्षं वा गायत्रीं ब्राह्म-णायानुब्रूयात् त्रिष्टुभं क्षत्रियाय जगतीं वैश्याय सावित्रीं त्वेवो-त्तरेणाग्निमुपविशतः प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरः । अ-धीहि भो३ इत्युक्त्वाचार्य ओँङ्कारं प्रयुज्याथेतरं वाचयति सावि-त्रीं भो अनुब्रूहीत्यथास्मै मन्वाह तत्सवितुर्वरेण्यमित्येतां पच्छोऽर्द्ध-र्चशोनवानम् ॥ ५ ॥

आपो नाम स्थ शिवा नाम स्थोर्जा नाम स्थाऽजरा नाम

स्थोऽभया नाम स्थाऽमृता नाम स्थ तासां वोऽशीय सुमतौ माधत्तेत्येव त्रिरप आचमय्य स्वस्ति नो मिमीतामिति पञ्चर्चेन दण्डं प्रयच्छाति वरो दक्षिणा प्रदक्षिणमग्निं पर्यास्थीत्य भिक्षते ग्रामं मातरं त्वेव प्रथमां या चैनं न प्रत्याचक्षीताचार्याय भैक्ष्यं निवेदयित्वाऽनुज्ञातो गुरुणा भुञ्जीताहरहः समिदाधानं भिक्षाचरणमधः शय्यां गुरुशुश्रूषेति ब्रह्मचारिणो नित्यानि ॥ ६ ॥

अथानुवाचनस्याग्नेरुत्तरत उपविशतः प्राङ्मुख आचार्य्यः प्रत्यङ्मुख इतरोऽभिवाद्य पादावाचार्य्यस्य दक्षिणेन जानुनाक्रम्य मूले कुशतरुणान् दक्षिणोत्तराभ्यां पाणिभ्यां मध्ये परिगृह्य तां सव्येनाचार्योऽग्रे संगृह्य दक्षिणेनाद्भिः परिषिञ्चन्नथेतरं वाचयति सावित्रीं भो ३ अनुब्रूहीतीतरः सावित्रीं ते अनुब्रवीमीत्याचार्यो गायत्रीं भो ३ अनुब्रूहीतीतरो गायत्रीं ते अनुब्रवीमीत्याचार्यो वैश्वामित्रीं भो३ अनुब्रूहीतीतरो वैश्वामित्रीं ते अनुब्रवीमीत्याचार्यो ऋषीं भो ३ अनुब्रूहीतीतर ऋषींस्ते अनुब्रवीमीत्याचार्यो देवता भो ३ अनुब्रूहीतीतरो देवतास्ते अनुब्रवीमीत्याचार्य्यः श्रुतिं भो३ अनुब्रूहीतीतरः श्रुतिं ते अनुब्रवीमीत्याचार्यः श्रद्धामेधे भो३ अनुब्रूहीतीतरः श्रद्धामेधे अनुब्रवीमीत्याचार्य एवमेवमृषेर्यस्य यस्य यो यो मन्त्रो यद्देवत्यो यच्छन्दाश्च तथा तं तं मन्त्रमनुब्रूयादपि वा विदन्नृषिदैवतच्छन्दांसि तत्सवितुर्वरेण्यमित्येतां पच्छोऽर्द्धर्चशो नवानमित्यपेति समाप्त आहाचार्य्य एवमेकैकमृषिमनुवाकं वाऽनुब्रूयात् क्षुद्रसूक्तेष्वनुवाकं यावद्वा गुरुर्मन्येताद्योतमेकामं सूक्ते वाऽनुब्रूयादृषेरनुवाकस्य वैकैकां सूक्तां दाविहैषा प्रभृतिरिति कामं सूक्तादाचार्य इत्येतदृषिस्वाध्याये व्याख्यातं कुशतरुणानादायाऽऽनडुहेन मूले कुण्डं कृत्वा यथासूक्तं कुशेष्वपो निषिञ्चत्यहःशेषं स्थानमुपवासश्च ॥ ७ ॥

अपराह्णेऽक्षतधाना भिक्षित्वाऽऽज्याहुतिधर्म्मेणाग्नौ पाणिना जुहुयात् सदसस्पतिमद्भुतमिति प्रत्यृचः सूक्तशेषेण भक्षैराचार्यं स्वस्तिवाच्य ॥ ८ ॥

अरण्ये समित्पाणिः सन्ध्यामास्ते नित्यं वाग्यत उत्तरापराभिमुखोऽन्वष्टमदेशमा नक्षत्राणां दर्शनादतिक्रान्तायां महाव्याहृतीः सावित्रीं स्वस्त्ययनानि च जपित्वैवं प्रातः प्राङ्मुखस्तिष्ठन्नामण्डलदर्शनात् ॥ ९ ॥

उदिते प्राध्ययनमहरहः सायं प्रातरग्निमुपसमाधाय परिसमूह्य पर्युक्ष्य दक्षिणं जान्वाच्याग्नये समिधमाहार्षं बृहते जातवेदसे स मे श्रद्धां च मेधां च जातवेदाः प्रयच्छतु स्वाहा । एधोऽस्येधिषीमहि समिदसि तेजोऽसि तेजो मयि धेहि स्वाहा । समिद्धो मां समर्द्धय प्रजया च धनेन च स्वाहा । एषा ते अग्ने समित्तया वर्द्धस्व चाचप्यायस्व वर्द्धिषीमही च वयमाचप्यासिषीमहि स्वाहेत्यथ पर्युक्ष्याग्निं श्रद्धां च मेधां चाविनिपातं स्मृतिं च मे ईक्षितो जातवेदा अयं शुनन्नः संप्रयच्छत्वित्यग्निमुपतिष्ठते । सौपर्णव्रतभाषितं दृष्टवृद्धसम्प्रदायानुष्ठितं त्र्यायुषं पञ्चभिर्मन्त्रैः प्रतिमन्त्रं ललाटे हृदये दक्षिणस्कन्धे वामे च ततः पृष्ठे च पञ्चसु भस्मना त्रिपुण्ड्रं करोति स एतेषां वेदानामेकं द्वौ त्रीन् सर्वान् वाऽधीते य एवं हुत्वाग्निमुपतिष्ठते ॥ १० ॥

अथ व्रतादेशनम् । तस्योपनयनेन कल्पो व्याख्यातो न सावित्रीमन्वाह । दण्डप्रदानान्तमित्येके । उदगयने शुक्लपक्षेऽहोरात्रं ब्रह्मचर्य्यमुपेत्याचार्योऽमांसाशी ब्रह्मचारी चतुर्दशीं परिहाप्याष्टमीं चात्रोत्तमे चैके यां वान्यां प्रशस्तां मन्येत तस्यां शुक्रिये ब्रह्मचर्य्यमादिशेत् त्रिरात्रं ब्रह्मचर्यं चरेद् द्वादशरात्रं संवत्सरं वा यावद्वा गुरुर्मन्येत शाक्करं तु संवत्सरं व्रातिकमौपनिषदं च पूर्णे काले

चरिते ब्रह्मचर्ये शंयोर्बार्हस्पत्यान्ते वेदेऽनूक्ते रहस्यं श्रावयिष्यन् कालनियमं चादेशेन प्रतीयेत ॥ ११ ॥

कृतप्रातराशस्यापराह्णेऽपराजितायां दिशि हुत्वाचार्योऽथैनं यास्वेव देवतासु परीतो भवति तास्वेवैनं पृच्छत्यग्नाविन्द्र आदित्ये विश्वेषु च देवेषु चरितं ते ब्रह्मचर्यमिति चरितं भो३ इति प्रत्युक्ते पश्चादग्ने पुरस्तादाचार्यस्य प्राङ्मुखे स्थितेऽहतेन वाससाचार्यः प्रदक्षिणं मुखं त्रिः परिवेष्ट्योपरिष्टाद्दशाः कृत्वा यथा न संभ्रश्येत त्रिरात्रं समिदाधानं भिक्षाचरणमधः शय्यां गुरुशुश्रूषां चाकुर्वन्वाग्यतोऽप्रमत्तोऽरण्ये देवकुलेऽग्निहोत्रे वोपवसस्वेत्यत्र हैके तानेव नियमाँस्तिष्ठतो रात्र्यामेवोपदिशन्त्याचार्योऽमांसाशी ब्रह्मचारी त्रिरात्रे निवृत्ते रात्र्यां वा ग्रामान्निष्क्रामन्नैतानीक्षेतानध्यायान् पिशितापं चण्डालं सूतिकां रजस्वलां तेदनिमपहस्तकाँछ्मशानं सर्वाणि च शवरूपाणि यान्यास्येन प्रविशेयुः स्वस्यवासां निरसनुदित आदित्येऽनुवाचनधर्म्मेण वाग्यतायोष्णीषिणेऽन्वाह महानाम्नीष्वेवैष नियमोऽथोत्तरेषु प्रकरणेषु स्वाध्यायमेव कुर्वत आचार्यस्येतरः शृणोत्युष्णीषभाजं दक्षिणा गां ददाति त्वतमित्युच्चादित्रीति च प्रणवेन वा सर्वमन्त्रहैके वैश्वदेवं चरुं कुर्वते सर्वेषु प्रकरणेषु यथापरीतमिति माण्डूकेयः ॥ १२ ॥

अथातो दण्डनियमानान्तरा गमनं कुर्यादात्मनो दण्डस्य चाथ चेद्दण्डमेखलोपवीतानामन्यतमाद्विशीर्य्येत छिद्येत वा तस्य तत्प्रायश्चित्तं यदुद्वाहे रथस्य मेखलाचेदसन्धेया भवत्यन्यां कृत्वानुमन्त्रयेते ।

मेध्यामेध्यविभागज्ञे मेधि देविमरस्वति ।

मेखले स्कन्नमाच्छिन्नं सन्तनुष्व व्रतं मम ॥ त्वमग्ने व्रतभृच्छुचिरग्ने देवाँ इहावह । उपयज्ञ हविश्च नः व्रतानि बिभ्रद् व्रतपा

अदाभ्यो भवानो दूतो अजरः सुवीरः दधद्रत्नानि सुमृडीको अग्ने गोपाय नो जातवेदस उपवीतं च दण्डे बध्नाति । तदप्येतत् ।

यज्ञोपवीतदण्डं च मेखलामजिनं तथा ।

जुहुयादप्सु व्रते पूर्णे वारुण्यर्चा रसेन वा ॥ ॥ १३ ॥

अथ वैश्वदेवो व्याख्यातो होमकल्पो वैश्वदेवस्य सिद्धस्य सायं प्रातर्गृह्येऽग्नौ जुहुयादग्नये स्वाहा सोमाय स्वाहेन्द्राग्निभ्यां स्वाहा विश्वकर्म्मणे स्वाहा भरद्वाजधन्वन्तरये स्वाहादितये स्वाहाऽनुमतये स्वाहाग्नये स्विष्टकृते स्वाहेति हुत्वैतासां देवतानामथ वास्तुमध्ये बलिं हरेद्देवताभ्यश्चैव देवताभ्यो नमो ब्रह्मणे ब्राह्मणेभ्यश्च वास्तोष्पते प्रतिजानीह्यस्मानिति वास्तुमध्ये वास्तोष्पतये चाथ दिशां प्रदक्षिणं यथारूपं बलिं हरति नम इन्द्रायैन्द्रेभ्यश्च नमो यमाय याम्येभ्यश्च नमो वरुणाय वारुणेभ्यश्च नमः सोमाय सौम्येभ्यश्च नमो बृहस्पतये बार्हस्पत्येभ्यश्चाथाऽऽदित्यमण्डले नमोऽदितय आदित्येभ्यश्च नमो नक्षत्रेभ्य ऋतुभ्यो मासेभ्योऽर्द्धमासेभ्योऽहोरात्रेभ्यः संवत्सरेभ्यः पूष्णे पथिकृते धात्रे मरुद्भ्यश्चेति देहलीषु विष्णवे दृषदि वनस्पतय इत्युलूखले ओषधीभ्य इत्योषधीनां स्थाने पर्ज्जन्यायाद्भ्य इति मणिके नमः श्रियै शय्यायां शिरसि पादतो भद्रकाल्या अनुगुप्ते देशे नमः सर्वान्नभूतयेऽथान्तरिक्षे नक्तञ्चरेभ्य इति सायमहश्चरेभ्य इति प्रातर्ये देवास इति चाविज्ञाताभ्यो देवताभ्य उत्तरतो धनपतये च प्राचीनावीती दक्षिणतः शेषन्निनयति ये अग्निदग्धा इति देवपितृनरेभ्यो दत्वा श्रोत्रियं भोजयेद् ब्रह्मचारिणे भिक्षां दद्यादनन्तरं सौवासिनीं गर्भिणीं कुमारान् स्थविराँश्च भोजयेच्छ्वभ्यः श्वपचेभ्यश्च वयोभ्यश्चावपेद् भूमाविति नानवनमश्नीयान्नैको न पूर्वं मोघमन्नं विन्दते अप्रचेता इति ॥ १४ ॥

षण्णां चेदर्घ्याणामन्यतम आगच्छेद्गोपशुमजमन्नं वा यत् सामान्यतमं मन्येत तत्कुर्यान्नामांसोऽर्घः स्यादधियज्ञमधिविवाहं कुरुतेत्येव ब्रूयाद्विवाह्याय प्राजापत्यो राज्ञ ऐन्द्रः प्रियाय मैत्रः स्नातकायैन्द्राग्नो यद्यप्यसकृत् संवत्सरस्य सोमेन यजेत कृतार्घ्या एवैनं याजयेयुर्नाकृतार्घ्यास्तदपि भवति ॥ १५ ॥

मधुपर्के च सोमे च पितृदैवतकर्म्मणि ।
अत्रैव पशवो हिंस्यान्नान्यत्रेत्यब्रवीन्मनुः ॥
आचार्यश्च पिता चोभौ सखा चानातिथिर्गृहे ।
ते यद्विदध्युस्तत् कुर्यादिति धर्मो विधीयते ॥
नैकग्रामीणमतिथिं विप्रोष्यागतमेव च ।
उपस्थितं गृहे विद्याद्भार्या यत्राग्नयोऽपि वा ॥
अग्निहोत्रं बलीवर्दाः काले चातिथिरागताः ।
बालाश्च कुलवृद्धाश्च निर्दहन्त्यपमानिताः ॥
अनड्वानग्निहोत्रं च ब्रह्मचारी च ते त्रयः ।
अश्नन्त एव सिद्ध्यन्ति नैषां सिद्धिरनश्नताम् ॥
देवताः पुरुषं गृह्या अहरहर्गृहमेधिनम् ।
भागार्थमुपसर्पन्ति ताभ्यो निर्वप्तुमर्हति ॥ ॥ १६ ॥
तृणान्यप्युञ्छतो नित्यमग्निहोत्रं च जुह्वतः ।
सर्वं सुकृतमादत्ते ब्राह्मणोऽनर्चितो वसन् ॥
उदपात्रात्तु दातव्यमाकाष्ठाज्जुहुयादपि ।
आसूक्तादानुवाकाद्वा ब्रह्मयज्ञोऽभिधीयते ॥
नोपवासः प्रवासे स्यात् पत्नी धारयते व्रतम् ।
पुत्रो भ्राताऽथवा पत्नी शिष्यो वास्य बलिं हरेत् ॥
वैश्वदेवमिमं ये तु सायं प्रातः प्रकुर्वते ।
ते अर्थैरायुषा कीर्त्या प्रजाभिश्च समृध्नुयुरिति ॥ ॥१७॥

ब्रह्मचारी प्रवत्स्यन्नाचार्य्यमामन्त्रयते प्राणापानयोरित्युपांश्वोमहं वत्स्यामि भो ३ इत्युच्चैः प्राणापाना उरुव्यचास्त्वया प्रपद्ये देवाय त्वा गोप्त्रे परिददामि देवसवितरेष ते ब्रह्मचारी परिददामि ते गोपायस्व तं मामृधस्वेत्युपांश्वों स्वस्तीत्युच्चैराचार्य्यः स्वस्तीत्युच्चैराचार्य्यः ॥ १८ ॥ ॥ इति गृह्यसूत्रे द्वितीयोऽध्यायः ॥२॥

स्नानं समावर्त्यमानस्यानडुहमित्युक्तम् । तस्मिन्नुपवेश्य केशश्मश्रूणि वापयति लोमनखानि च व्रीहियवैस्तिलसर्षपैरपामार्गैः सदापुष्पीभिरित्युद्राप्यापोहिष्ठीयेनाभिषिच्यालंकृत्य युवं वस्त्राणीति वाससी परिधायाथाऽस्मै निष्कं बध्नात्यायुष्यं वर्चस्यं ममाग्ने वर्च इति वेष्टनं गृहं गृहमहनेति च्छत्रमारोहतेत्युपानहौ दीर्घस्ते अस्त्वकुश इति वैष्णवं दण्डमादत्ते । प्रतिजीनस्तदहरासीत वनस्पते वीडूनङ्गः शास इत्येति रथमारोहयेद्यत्रैनं गवा वा पशुना वा अर्हयेयुस्तत्पूर्वमुपतिष्ठेत गोभ्यो वा समावर्तेत फलवतो वा वृक्षादिन्द्रश्रेष्ठानि द्रविणानि धेहि स्योना पृथिवी भवेत्युवेशेहलीस्पितमन्नं तदहर्भुञ्जीताचार्यायै वस्त्रयुगं दद्यादुष्णीषमणिकुण्डलं दण्डोपानहं छत्रं च ॥ १ ॥

अगारं कारयिष्यन्निहाज्ञाघाय विशः परिगृह्णामीत्युदुम्बरशाखया त्रिः परिलिख्य मध्ये स्थण्डिले जुहोति कोऽसि कस्याऽसिकायते ग्रामकामो जुहोमि स्वाहा । अस्यां देवानामसि भागधेयमितः प्रजाताः पितरः परेताः । विराड्वजुहदुग्रामकामो न देवानां किञ्चनान्तरेण स्वाहेति स्थूणागर्तान् खादयित्वोदमन्थानासिच्य इमं विमिन्त्रे अमृतस्य शाखां मधोर्धारां प्रतरणीं वसूनाम् । एनां शिशुः क्रन्दत्याकुमार एनां धेनुः क्रन्दतु नित्यवत्सेत्युदुम्बरशाखां घृतेनाक्तां दक्षिणे द्वार्य्ये गर्ते निदधाति । इमामुच्छ्रयामि भुवनस्य शाखां मधोर्धारां प्रतरणीं वसूनाम् । एनां शिशुः

क्रन्दत्त्वाकुमार एनां धेनुः क्रन्दतु पाकवत्सेत्युत्तरत एवं द्वयोर्द्वयो-र्दक्षिणतः पश्चादुत्तरतश्च इमामहमस्य वृक्षस्य शाखां घृतमुक्षतीम् अमृते मिनोमि । एनां शिशुः क्रन्दत्त्वाकुमार आस्यन्दन्तान्धेनवो नित्यवत्सा इति स्थूणाराजमुच्छ्रयत्येनं कुमारस्तरुण आवत्सो भु-वसस्परि एनं परिस्रुतः कुम्भ्या आदध्नः कलशैर्गमन् ॥ २ ॥

एइहैव स्थूणे प्रतितिष्ठ ध्रुवाश्वापती गोमती सीलमावती क्षेमे तिष्ठ घृतमुक्षमाणेहैव तिष्ठ निमित्तानि तिल्विलास्थाजिरावती मध्ये पोषस्य तृम्पतां मा माप्रवायवः । उपहूता इह गाव उप-हूता अजावयः अथो अन्नस्य कीलाल उपहूतो गृहेषु नः । रथ-न्तरे प्रतितिष्ठ वामदेव्ये श्रयस्व बृहतिस्तभायेति स्थूणाराजमभि-मृशति संमितस्य स्थूणाः संमृशति सत्यं च श्रद्धां चेति पूर्वे यज्ञ-श्च दक्षिणा चेति दक्षिणे, बलं चौजश्चेत्यपरे, ब्रह्म च क्षत्रं चेत्यु-त्तरे श्रीस्तूपो धर्मस्थूणाराजोऽहोरात्रे द्वारफलके संवत्सरेऽपिधान-मुक्षा समुद्रमभ्यक्तमश्मानं स्तूपस्याधस्तान्निखनेत् ॥ ३ ॥

वास्तोष्पतीये कर्म्मण्यग्निं दधामि मनसा शिवेनायमस्तु सं-गमनो वसूनां मा नो हिंसी स्थविरं मा कुमारम् । शन्नो भव द्वि-पदे शं चतुष्पद इति गृह्यमग्निं बाह्यत उपसमाधाय प्रागग्रेषु नवेषु कुशेषूदकुम्भं नवं प्रतिष्ठाप्यारिष्टा अस्माकं वीरा मा परासेचिनो धनमित्यभिमन्त्र्य रथन्तरस्य स्तोत्रियेण पुनरादाय ककुप्कारं तिस्रः पूर्वाह्णे जुहोति वामदेव्यस्य मध्यन्दिने बृहतोऽपराह्णे महाव्या-हृतयश्चतस्रो वास्तोष्पते इति तिस्रोऽमीवहा वास्तोष्पते वास्तोष्पते ध्रुवा स्थूणा सौविष्टकृती दशमी स्थापाकस्य रात्रौ ज्येष्ठं पुत्रमा-दाय जायां च सहधान्यः प्रपद्येत इन्द्रस्य गृहाः शिवा वसुमन्तो वरूथिनस्तानहं प्रपद्ये सह जायया सह प्रजया सह पशुभिः सह रायस्पोषेण सह यन्मे किञ्चास्ति तेन ॥ ४ ॥

शर्म्म शर्म्म शिवं शिवं क्षेमाय वः शान्त्यै प्रपद्येऽभयं नो अस्तु ग्रामो मारण्याय परिददातु विश्वमहाय मा परिदेहीति ग्रामान्निष्क्रामन्नरण्यं ग्रामाय परिददातु महविश्वाय मा परिदेहीति । ग्रामं प्रविशन्नरिक्तोः गृहान् भद्रान् सुमनसः प्रपद्ये वीरघ्नो वीरतरः सुवीरान् इरां वहतो घृतमुक्षमाणा अन्येष्वहं सुमनाः संविशेयमिति सदा प्रवचनीयः ॥ ५ ॥

अनाहिताग्निः प्रवत्स्यं गृहान् समीक्षते । इमां मे मित्रावरुणौ गृहान् गोपायतं युवौ । अविनष्टानविन्हुतान् पूषैनानभिरक्षत्वस्माकं पुनरागादपि पन्थामगन्महीति च जपति ॥ ६ ॥

अथ प्रोष्यायन् गृहान् समीक्षते गृहा मा बिभीत मा वेपध्वमूर्जं बिभ्रतरामसि ऊर्जं बिभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः । येषामध्येति प्रवसंन्येषु सौमनसो बहुः गृहानुपह्वयामहे ते नो जानन्तु जानतः । उपहूता इह गाव उपहूता अजावयः अथो अन्नस्य कीलाल उपहूतो गृहेषु नः । अयं नो अग्निर्भगवानयं नो भगवत्तरः । अस्योपसद्ये मारिषा मायं श्रैष्ठ्ये दधातु न इति गृहमग्निमुपस्थाय कल्याणीं वाचं प्रब्रूयाद्विराजो दोहोऽसि विराजो दोहमशीय मयि पद्यायै विराजो दोह इति पाद्यं प्रतिग्रहणः ॥७॥

अनाहिताग्निर्न्नवं प्राशिष्यन्नाग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यः स्वाहाकारेण गृह्येऽग्नौ जुहुयात् प्रजापतये त्वा ग्रहं गृह्णामि मह्यं श्रियै मह्यं यशसे मह्यमन्नाद्यायेति प्राशनार्थीयमभिमन्त्र्य भद्रान्नः श्रेयः समनैष्टदेवतास्त्वया वशेन समशीमहि त्वा सनोमयोभूः पितवाविशस्व शन्नो भव द्विपदे शं चतुष्पद इत्यद्भिरभिषिञ्चँस्त्रिः प्राश्नात्यमोसि प्राण तदृतं ब्रवीम्यमोसि सर्वाङ्गसि प्रविष्टः स मे जरां रोगमपनुद्य शरीरादमामराधिममामृधाम इन्द्रेति हृदयदेशमभिमृशति । नाभिरसि मा बिभीथाः प्राणानां ग्रन्थिरसि मा वि-

स्नम इति नाभिं, भद्रं कर्णेभिरिति यथालिं तच्चक्षुरित्यादित्यमुपस्थाय ॥ ८ ॥

परिवः मैन्याद्धयाघ्यात्रअन्तु घोषिण्यः । समानस्तस्य गोपतेर्गावो अंशो नवोरिषत् पूषा अन्वेतु न इति गाः प्रतिष्ठमानाया अनुमन्त्रयेत परिक्रान्तासु यासामूधश्चतुर्बिलं मधोः पूर्णं घृतस्य च ता नः सन्तु पयस्वतीर्वह्वीर्गोष्ठे घृताच्य इत्यागावो अग्मन्निति च प्रत्यागतासूत्तमा ममाकुर्न्मयोभूर्वात इति सूक्तेन गोष्ठे गताः ॥९॥

या फल्गुन्या उत्तरामावास्या सा रेवत्या संपद्यते तस्यामङ्कलक्षणानि धारयेद् भुवनमसि सहस्रपोषमिन्द्राय त्वाश्वो ददत् अक्षतमिष्टमिलाभं गोपायनं यावतीनामिदं करिष्यामि भूयसीनायुत्तमां सा मां क्रियासमिति या प्रथमा प्रजायेत तस्याः पीयूषं जुहुयात् संवत्सरीणं पय उष्णियाया इत्येताभ्यामृग्भ्यां यदि यमौ प्रजायेत माहव्याहुतिभिर्हुत्वा यमसूं दद्यात् ॥ १० ॥

अथ वृषोत्सर्गः । कार्तिक्यां पौर्णमास्यां रेवत्यां वाश्वयुज्यस्य गवां मध्ये सुसमिद्धमग्निं कृत्वाज्याहुतीर्जुहोति इह रतिरिह रमध्वं स्वाहा इह धृतिरिहः स्वधृतिः स्वाहा उपसृजं धरुणं मात्रे धरुणो मातरं धयन् रायस्पोषमस्यासुदीधरत् स्वाहा पूषा गा अन्वेतु न इति पौष्णस्य जुहोति रुद्रान् जपित्वैकवर्णं द्विवर्णं त्रिवर्णं वायवा यूथेन छाद्यते रोहितो वैव स्यात् सर्वाङ्गैरुपेतो यूथे वर्चस्वितमः स्यात्तमलङ्कृत्य यूथे मुख्याश्चतस्रो वत्सतर्यस्ताश्चालङ्कृत्येतं युवानं पतिं वो ददामि तेन क्रीडन्तीश्च रथप्रियेण मावस्थात्र जनुषा संविदाना रायस्पोषेण समिषा मदेम स्वाहेति । मध्यस्थेऽनुमन्त्रयते मयोभूरित्यनुवाकशेषेण सर्वासां पयसि पायसं श्रपयित्वा ब्राह्मणान् भोजयेत ॥ ११ ॥

ऊर्ध्वमाग्रहायण्या तिस्रोऽष्टका अपरपक्षेषु तासां प्रथमायां शाकं

जुहोति इयमेव सा या प्रथमा व्युच्छदन्तरस्यां चरति प्रतिष्ठा वधूर्जजान नवकृज्जनित्री त्रय एनां महिमानः सचन्ता स्वाहेत्यथ स्विष्टकृतो यस्यां वैवस्वतो यमः सर्वे देवाः समाहिताः अष्टका सर्वतोमुखी सा मे कामानतीतृपद् । आहुस्ते ग्रावाणो दन्तानूधः पवमानः मासाश्चार्द्धमासाश्च नमस्ते सुमनामुखि स्वाहेति ॥ १२ ॥

मध्यमायां मध्यावर्षे च महाव्याहृतयश्चतस्रो ये तातृषुरिति चतस्रोऽनुद्रुत्य वपां जुहुयाद्वहुवपां जातवेदः पितृभ्यो यत्रैनान् वेत्थ सुकृतस्य लोके मेदसः कुल्या उप ताः स्रवन्तु सत्याः सन्तु यजमानस्य कामाः स्वाहेति वा महाव्याहृतयश्चतस्रो ये तातृषुरिति चतस्रोऽष्टाहुतिस्थालीपाको वदानमिश्रोऽन्तर्हिता गिरयोऽन्तर्हिता पृथिवीमहं दिवा दिग्भिश्च सर्वाभिरन्यमन्तः पितुर्दधेऽमुष्यै स्वाहा । अन्तर्हिताम ऋतवोऽहोरात्राश्च सन्धिजाः मासाश्चार्द्धमासाश्चान्यमन्तः पितुर्दधेऽमुष्यै स्वाहा । यास्तिष्ठन्ति याः स्रवन्ति यादभ्राः परिसस्नुषीः अद्भिः सर्वस्य भर्तृभिरन्यमन्तः पितुर्दधेऽमुष्यै स्वाहा । यन्मे माता प्रलुलुभे विचरन्त्यपतिव्रता रेतस्तन्मे पिता वृङ्क्तां मातुरन्योऽवपद्यतामुष्यै स्वाहेति वा महाव्याहृतीनां वा स्थाने चतस्रोऽन्यत्र करणस्य पायसो वा चरुः श्वोऽन्वष्टक्यं पिण्डापितृयज्ञावृता ॥ १३ ॥

उत्तमायामपूपाञ्जुहोत्युक्थ्यश्चाऽतिरात्रश्च सद्यःक्री छन्दसा सह अपूपकृदष्टके नमस्ते सुमनामुखि स्वाहेति । गोपशुरजस्थालीपाको वाऽपि वा गोग्रासमाहरेदपि वारण्ये कक्षमपादहेदेषा मेऽष्टकेति न त्वेव न कुर्वीत न त्वेव न कुर्वीत ॥ १४ ॥ इति गृह्यसूत्रे तृतीयोऽध्यायः ॥ ३ ॥

मासि मासि पितृभ्यो दद्याद् ब्राह्मणान् वेदविदो युग्माँस्त्र्यवराध्यर्यान् पितृवदुपवेश्यायुग्मान्युदपात्राणि तिलैरवकीर्यासावेतत्त

इत्यनुदिश्य ब्राह्मणानां पाणिषु निनयेदत उर्द्धमलङ्कृतामन्त्र्याथो कृत्वाऽन्नं चासावेतत्त इत्यनुदिश्य भोजयद्भुञ्जानेषु महाव्याहृतीः सावित्रीं मधुवातीयाः पितृदेवत्याः पावमानीश्च जपेद्भुक्तवत्सु पिण्डान् दद्यात् पुरस्तादेके पिण्डान् पश्चिमेन तत्पत्नीनां किञ्चिदन्तर्धाय ब्राह्मणेभ्यः शेषं निवेदयेदग्नौकरणादि पिण्डपितृयज्ञेन कल्पो व्याख्यातः ॥ १ ॥

अथात एकोद्दिष्टमेकपवित्रमेकार्घ्यमेकपिण्डं नावाहनं नाग्नौकरणं नात्र विश्वेदेवाः स्वदितमिति तृप्तिप्रश्न उपतिष्ठतामित्यक्षय्यस्थानेऽभिरम्यतामिति विसर्गः संवत्सरमेवं प्रेते चतुर्थविसर्गश्च ॥ २ ॥

अथ सपिण्डीकरणम् । संवत्सरे पूर्णे त्रिपक्षे वा यदहर्वा वृद्धिरापद्येत चत्वार्युदपात्राणि सतिलगन्धोदकानि कृत्वा त्रीणि पितृणामेकं प्रेतस्य प्रेतपात्रं पितृपात्रेष्वासिञ्चति ये समाना इति द्वाभ्यामेवं पिण्डमप्येतत्सपिण्डीकरणम् ॥ ३ ॥

अथात आभ्युदयिकमापूर्यमाणपक्षे पुण्याहे मातृयागं कृत्वा युग्मान् वेदविद्ब्राह्मणानुपवेश्य पूर्वाह्णे प्रदक्षिणमुपचारः पितृमन्त्रवर्जं जपऋजवो दर्भा यवैस्तिलार्थोदधिबदराक्षतमिश्राः पिण्डा नान्दीमुखान् पितॄनावाहयिष्य इत्यावाहने नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने नान्दीमुखान् पितॄन् वाचयिष्य इति वाचने संपन्नमिति तृप्तिप्रश्ने समानमन्यदत्रिरुद्धमिति ॥ ४ ॥

अथोपाकरणमोषधीनां प्रादुर्भावे हस्तेन श्रवणेन वाक्षतसक्तूनां धानानां च दधिघृतमिश्राणां प्रत्यृचं वेदेन जुहुयादिति हैक आहुः सूक्तानुवाकाद्याभिरिति वाऽध्यायार्षेयाद्याभिरिति माण्डूकेयोऽथ ह स्माह कौषीतकिरग्निमीळे पुरोहितमित्येका कुपुम्भकस्तदब्रवीदावदँस्त्वं शकुने भद्रमावद गृणाना जमदग्निना धामं ते

विश्वं भुवनमधिश्रितं गन्ता नो यज्ञं यज्ञियाः सुशमि यो न स्वोअरणः पतिचक्ष्व विचक्ष्वाग्ने याहि मरुत्सखा यत्ते राजं घृतं हविरिति द्वृचा तच्छंयोरावृणीमह इत्येका हुतशेषाद्धविः प्राश्नन्ति दधिक्राव्णो अकारिषमित्येतयाचम्योपविश्य महाव्याहृतीः सावित्रीं वेदादिप्रभृतीनि च स्वस्त्ययनानि च जपित्वाचार्यं स्वस्तिवाच्य तदपि भवति ॥

अयातयामतां पूजां सारत्वं छन्दसां तथा ।
इच्छन्त ऋषयोऽपश्यन्नुपाकर्म तपोबलात् ॥
तस्मात् षट्कर्म नित्येनात्मनो मन्त्रसिद्धये ।
उपाकर्त्तव्यमित्याहुः कर्म्मणां सिद्धिमिच्छता ॥
उपाकर्म्मणि चोत्सर्गे त्रिरात्रं क्षपणं भवेत् ।
अष्टकासु त्वहोरात्रम् ऋत्वन्त्यासु च रात्रिषु ॥ ॥ ५ ॥

माघशुक्लप्रतिपद्यपराजितायां दिशि बह्वौषधिके देश उदुत्यं जातवेदसं चित्रं देवानां नमो मित्रस्य सूर्योमोदिवस्यात्विति सूर्याणि च जपित्वा शाम इत्था महाँ असीति प्रदक्षिणं प्रत्यृचं प्रतिदिशं प्रत्यस्य लोष्ठानृषींश्छन्दांसि तर्पयित्वा प्रतिपुरुषं च पितॄंश्छन्दांसि विश्रामयन्त्यर्द्धसप्तमान्मासानर्द्धषष्ठान् वाधीयीरँश्चेदहोरात्रमुपरम्य प्राध्ययनम् ॥ ६ ॥

अथोपरममुत्पातेष्वाकालमन्येष्वद्भुतेषु च विद्युत्स्तनयित्नुवर्षासु त्रिसंध्यमेकां श्राद्धभोजने दशाहमद्य सूतकेषु च चतुर्दश्यमावास्ययोरष्टकासु च वासरेषु नभ्येषु चाचार्योपरते दशाहं श्रुत्वा त्रिरात्रं तत्पूर्वाणां च प्रतिग्रहे श्राद्धवत्सब्रह्मचारिणि प्रेतमनुगत्वा पितृभ्यश्च निधाय पिण्डान्निशां संध्यां पर्वस्वस्तमिते शूद्रसन्निकर्षे सामशब्दे श्मशाने ग्रामारण्येऽन्तःशवे ग्रामे दर्शनीयादश्रवणीयादनिष्टघ्राणेऽतिवातेऽभ्रे न वर्षाणि रथ्यायां वीणाशब्दे च रथस्थः

शूद्रवल्गुनि वृक्षारोहणे वटारोहणे ऽप्युक्रन्दत्यार्तौ नग्न उच्छिष्टसंक्रमे केशश्मश्रुवापनास्नानादुत्सादने स्नाने संवशनेऽभ्यञ्जने प्रेतस्पर्शिनि सूतिकोदक्ययोश्च शूद्रवदपिहितपाणिः सेनायामभुञ्जाने ब्राह्मणे गोषु चातिक्रान्तेष्वधीयीरन्नन्ते तेषां यदि किञ्चिद् कालो ऽयातो भवेत्प्राणानायम्यादित्यमीक्षित्वाऽधीयीत विद्युत्स्तनयित्नुवर्षवर्जं कल्पे वर्षवदर्द्धषष्ठेषु । तदप्येतत् ।

अन्नमापो मूलफलं यच्चान्यच्छ्राद्धिकं भवेत् ।

प्रतिगृह्याप्यनध्यायः पाण्यास्यो ब्राह्मणः स्मृत, इति ॥ ॥ ७ ॥

न्यायोपेतेभ्यश्च वर्तयेत्प्राङ्मुखोदङ्मुखासीन आचार्यो दक्षिणत उदङ्मुख इतरो द्वौ वा भूयाँसस्तु यथावकाशं नोच्छ्रितासनोपविष्टो गुरुसमीपे नैकासनस्थो न प्रसादितपादो न बाहुभ्यां जानूपसंगृह्य नोपाश्रितशरीरो नोपस्थकृतपादो न पादकुठारिकां कृत्वाऽधीहि भो ३ इत्युक्त्वाऽऽचार्य ओँङ्कारं प्रचोदयेदोमित्यीतरः प्रतिपद्यते ततसन्ततमधीयीताधीत्योपसंगृह्य विरताः स्म भो इत्युक्त्वा यथार्थं विसृष्टं विरामस्तावदित्येकेनाधीयतामन्तरा गच्छेन्नात्मानं विपरिहरेदधीयानो यदि चेद्दोषः स्यात्त्रिरात्रमुपोष्याहोरात्रं वा सावित्रीमभ्यावर्त्तयेद्यावच्छक्नुयाद् ब्राह्मणेभ्यः किञ्चिद् दद्यादहोरात्रमुपरम्य प्राध्ययनम् ॥ ८ ॥

स्नात उपस्पर्शनकालेऽवगाह्य देवतास्तर्पयति । अग्निस्तृप्यतु वायुस्तृप्यतु सूर्यस्तृप्यतु विष्णुस्तृप्यतु प्रजापतिस्तृप्यतु सहस्राक्षस्तृप्यतु । सोमः ब्रह्मा वेदाः देवाः ऋषयः सर्वाणि च छन्दांसि ओँङ्कारः वषट्कारः महाव्याहृतयः सावित्री यज्ञाः द्यावापृथिवी नक्षत्राणि अन्तरिक्षम् अहोरात्राणि संख्या संध्या समुद्राः नद्यः गिरयः क्षेत्रौषधिवनस्पतिगन्धर्वाप्सरसः नागाः वयांसि सिद्धाः साध्याः विप्राः यक्षाः रक्षांसि भूतान्येवमन्तानि तृप्यन्तु । श्रुतिं तर्पयामि स्मृतिं तर्पया-

मि धृतिं तर्पयामि श्रद्धामेधे धारणां च गोब्राह्मणं स्थावरजङ्गमानि सर्वभूतानि तृप्यन्त्विति यज्ञोपवीतीति ॥ ९ ॥

अथ प्राचीनावीती पित्र्यां दिशमीक्षमाणः शतर्चिनः माध्यमाः गृत्समदः विश्वामित्रः जमदग्निः वामदेवः अत्रिः भरद्वाजः वसिष्ठः प्रगाथाः पावमानाः क्षुद्रसूक्तमहासूक्ताः सुमन्तुः जैमिनिवैशम्पायनपैलसूत्रभाष्यगार्ग्यबभ्रुबाभ्रव्यमण्डुमाण्डव्याः गार्गी वाचक्नवी वडवा प्रातिथेयी सुलभा मैत्रेयी कहोळं कौषीतकीं महाकौषीतकीं सुयज्ञं शाङ्खायनम् आश्वलायनम् ऐतरेयं महैतरेयं भारद्वाजं जातूकर्ण्यं पैङ्ग्यं महापैङ्ग्यं बाष्कलं गार्ग्यं शाकल्यं माण्डूकेयं महादमत्रम् औदवाहिं महौदवाहिं सौजामिं शौनकिं शाकपूणिं गौतमीं ये चान्ये आचार्यास्ते सर्वे तृप्यन्त्विति प्रतिपुरुषं पितरः पितृवंशस्तृप्यतु मातृवंशस्तृप्यतु ॥ १० ॥

न नग्नां स्त्रियमीक्षेतान्यत्र मैथुनान्नादित्यं संधिवेलयोरनाप्तप्रकार्यकारिणं प्रेतस्पर्शिनं सूतिकोदक्याभ्यां न संवदेदुतैश्चोद्धृततेजांसि न भुञ्जीत न यातयामैः कार्यं कुर्यान्न सह भुञ्जीत न शेषं पितृदेवतातिथिभृत्यानां शेषं भुञ्जीतोञ्छिशिलमयाचितप्रतिग्रहः साधुभ्यो याचितो वा याजनं वृत्तिः पूर्वं पूर्वं गरीयो संसिद्धमानायां वैश्यवृत्तिर्वा प्रमत्तः पितृदेवतकार्येष्वृतौ स्वदारगामी न दिवा शयीत न पूर्वापररात्रौ न भूमावनन्तर्हितायामासीत नित्योदकी यज्ञोपवीती न विरहयेदाचार्यमन्यत्र नियोगादनुज्ञातो वा अहरहराचार्यमभिवादयेद् गुरुभ्यश्चासमेत्य श्रोत्रियस्य प्रोष्य प्रत्येत्याश्रोत्रियस्यासावहं भो ३ इत्यात्मनो नामादिश्य व्यस्तस्य पाणी असा उ इत्यस्य पाणी संगृह्याऽऽशिषमाशास्ते नावृतो यज्ञं गच्छेदधर्माच्च जुगुप्सेत न जनपमवायं गच्छेन्नोपर्युदिशेत्समेत्यानाक्रोशाक्रोऽपिशुनोकुलंकुलोनेतिहेतिस्यान्नैकश्चरेन्न तप्तौ नापिहितपाणि-

देवायतनानि प्रदक्षिणं न धावेन्न ष्ठीवेन्न कण्डूयेन्मूत्रपुरीषे नावेक्षेतावगुण्ठ्यासीतानन्तर्हितायां यद्येकवस्त्रो यज्ञोपवीतं कर्णे धृत्वा नादित्यमभिमुखो न जघने नाहरुदङ्मुखो नक्तं दक्षिणामुखो न चाप्सु श्लेष्म न च समीपेऽन्नवृक्षमारोहेन्न कूपमीक्षेत न धुवनं गच्छेन्न स्तेव तु श्मशानं सवस्त्रोऽहरहराप्लुवेदाप्लुत्याभ्युदकोऽन्यद्वस्त्रमाच्छादयेत् ॥ १२ ॥

रोहिण्यां कृषिकर्माणि कारयेत् पुरस्तात् कर्मणां प्राच्यां क्षेत्रमर्यादायां द्यावापृथिवीयं बलिं हरेद् द्यावापृथिवीयमर्चा नमो द्यावापृथिवीभ्यामितिचोपस्थानं प्रथमप्रयोगे सीरस्य ब्राह्मणः सीरं स्पृशेच्छुनंनः फाला इत्येतामनुब्रुवन् क्षेत्रस्य पतिनेति प्रदक्षिणं प्रत्यृचं प्रतिदिशमुपस्थानम् ॥ १३ ॥

उदकं तरिष्यन् स्वस्त्ययनं करोत्युदकाञ्जलींस्त्रीनप्सु जुहोति समुद्राय वैष्णवे नमो वरुणाय धर्मपतये नमः सर्वाभ्यो नदीभ्यः सर्वासां पित्रे विश्वकर्म्मणे दत्तं हविर्जुषतामिति जपित्वा प्रतीपं स्रवन्तीभ्य उन्नीयंस्थावराभ्यस्तरँश्चेद्धयं शङ्केद्वाशिष्टं सूक्तं जपेत् समुद्रज्येष्ठा इत्येतत् प्लवन् ॥ १४ ॥

श्रवणः श्राविष्ठीयायां पौर्णमास्यामक्षतसक्तूनां स्थालीपाकस्य वा जुहोति विष्णवे स्वाहा श्रवणाय स्वाहा श्रावण्यै पौर्णमास्यै स्वाहा वर्षाभ्यः स्वाहेति गृह्यमग्निं बाह्यत उपसमाधाय लाजानक्षतसक्तूँश्च सर्पिषा संनिनीय जुहोति दिव्यानां सर्पाणामधिपतये स्वाहा दिव्येभ्यः सर्पेभ्यः स्वाहेत्युत्तरेणाऽग्निं प्रागग्रेषु नवेषु कुशेषूदकुम्भं प्रतिष्ठाप्यदिव्यानां सर्पाणामधिपतिरवनेनिक्तां दिव्याः सर्पा अवनेनिजन्तामित्यपो निनयति दिव्यानां सर्पाणामधिपतिः प्रलिखतां दिव्याः सर्पा प्रलिखन्तामिति फणेन चेष्टयति दिव्यानां सर्पाणामधिपतिः प्रलिंपतां दिव्याः सर्पाः प्रलिपन्तामिति

वर्णकस्य मात्रा निनयति दिव्यानां सर्पाणामधिपतिराबध्नीतां दिव्याः सर्पा आबध्नन्तामिति सुमनस उपहरति दिव्यानां सर्पाणामधिपतिराच्छादयतां दिव्याः सर्पा आच्छादयन्तामिति सूत्रतन्तुमुपहरति दिव्यानां सर्पाणामधिपतिराक्तां दिव्याः सर्पा आञ्जतामिति कुशतरुणे पद्यान्तमाञ्जनस्य करोति दिव्यानां सर्पाणामधिपतिरीक्षतां दिव्याः सर्पा ईक्षन्तामित्यादर्शेनेक्षयति दिव्यानां सर्पाणामधिपत एष वो बलिरिति बलिमुपहरत्येवमान्तरिक्षाणां दिश्यानां पार्थिवानामिति त्रिस्त्रिरुच्चैस्तरामुच्चैस्तरां पूर्वं नीचैस्तरान्नीचैस्तरामुत्तरमेवमहरहरक्षतसक्तूनां दर्वेणोपघातमां प्रत्यवरोहणाद्रात्रौ रात्रौ वाग्यतः सोदकं बलिं हरेद्वाग्यतावेनमुपमादयेद्य उपक्रमः स उत्सर्गः सूत्रामाणमिति शय्यामारोहेत् ॥ १५ ॥

आश्वयुज्यां पौर्णमास्यामैन्द्रः पायसोऽश्विभ्यां स्वाहाऽश्वयुग्भ्यां स्वाहाऽश्वयुज्यै पौर्णमास्यै स्वाहा शरदे स्वाहा पशुपतये स्वाहा पिङ्गलाय स्वाहेत्याज्यस्य हुत्वाथ पृषातकस्या गावो अग्मन्नित्येतेन सूक्तेन प्रत्यृचं जुहुयान्मातृभिर्वत्सां संसृजन्ति तां रात्रीमप्यन्नब्राह्मणभोजनम् ॥ १६ ॥

आग्रहायण्यां प्रत्यवरोहेद्रोहिण्यां प्रोष्ठपदासु वा प्रातः शमीपलाशमधूकेषीकापामार्गाणां शिरीषोदुम्बरबदरीणां च पूर्णमुष्टिमादाय सीतालोष्टं चोदपात्रे निधाय महाव्याहृतीः सावित्रीं चोद्गृत्यायनः शोशुचदघमित्येतेन सूक्तेन तस्मिन्निमज्य निमज्य प्रदक्षिणं शरणेभ्यः पाप्मानमपहरत्योत्तरतो निनयेन्मधुपर्को दक्षिणा ॥ १७ ॥

ग्रीष्मो हेमन्त उत वा वसन्तः शरद्वर्षाः सुकृतन्नो अस्तु तेषामृतूनां शरशारदानां निपात एषामुभये स्याम स्वाहा अपश्वेतपदाजहि पूर्वेण चाऽपरेण च सप्त च वारुणीरिमाः सर्वाश्च राज-

बान्धवैः स्वाहा श्वेताय वैदार्भ्याय स्वाहा तक्षकाय वैशालेय स्वाहा विशालाय स्वाहेत्याजस्य हुत्वा सहेमन्तः सुवसन्तः सुग्रीष्मः प्रतिधीयतां सुवर्षाः सन्तु नो वर्षाः शरदः सम्भुवन्तु न इति शन्नो मित्र इति पलाशशाखया विमृज्य समुद्रादूर्मिरित्यभ्युक्ष्य स्योना पृथिवी भवेति स्रस्तरमास्तीर्य ज्येष्ठदक्षिणपार्श्वैः संविशन्ति प्रतिब्रह्मन् प्रतितिष्ठामि क्षत्र इति दक्षिणैः प्रत्यश्वेषु प्रतितिष्ठामि गोष्विति सव्यैः प्रतिपशुषु प्रतितिष्ठामि पुष्टाविति दक्षिणैः प्रतिप्रजायां प्रतितिष्ठाम्यन्न इति सव्यैरुदीर्ष्वजी इत्युपस्थानैस्तस्त्वरेतां रात्रीं शेरते यथासुखमत ऊर्ध्वम् ॥ १८ ॥

चैत्र्यां पौर्णमास्यां कर्कन्धुपर्णानि मिथुनानां च यथोपपादम् । विष्ठस्य कृत्वैन्द्राग्नस्तुण्डिलो रौद्रा गोलकलोकतो नक्षत्राण्यन्वाकृतयश्च लोकतो नक्षत्राण्यन्वाकृतयश्च ॥ १९ ॥ ॥ इति गृह्यसूत्रे चतुर्थोऽध्यायः ॥

अथ प्रवत्स्यन्नन्तमन्तरण्योः समिधवाग्निं समारोहयत्येहि मे प्राणानारोहयन्नित्सकृत्सकृन्मन्त्रेण द्विर्द्विस्तूष्णीमयं ते योनिरिति वारणी प्रतितपति समिधं वानस्तमिते च मन्थनमुपलिप्त उद्धृतावोक्षितेऽग्निमाहृत्योपावरोहेत्युपावरोहणं मनुगतेऽग्नौ सर्वमायःश्चित्ताहुतीर्हुत्वा पाहि नो अग्न एधसे स्वाहा पाहि नो विश्ववेधसे स्वाहा सर्वं पाहि शतक्रतो स्वाहा । व्रतपाना उपोष्याज्यस्य हुत्वा त्वमग्ने व्रतपा इति ॥ १ ॥

अथ पुष्करिणीकूपतडागानां शुद्धपक्षे पुण्ये वा तिथौ पयसा यवमयं चरुं श्रपयित्वा त्वं नो अग्न इति द्वाभ्यामवते हेल इमं मे वरुणोदुत्तमं वरुणेमां धियं शिक्षमाणस्य गृह्योपगृह्योमयोभूराखरोनिःसरो निःकासः सपत्नदूषण इति वारुण्यादिदिक्प्रभृति प्रदक्षिणं जुहुयान्मध्ये पयसा जुहोति विश्वतश्चक्षुरिदं विष्णुरिति

यत् किञ्चेदमिति मज्जयित्वा धेनुर्दक्षिणा वस्त्रयुग्मं चातो ब्राह्मण-भोजनम् ॥ २ ॥

अथारामेऽग्निमुपसमाधाय स्थालीपाकं श्रपयित्वा विष्णवे स्वाहेन्द्राग्निभ्यां स्वाहा विश्वकर्म्मणे स्वाहेति यान्वो नर इति प्रत्यृचं जुहुयाद्वनस्पते शतवल्श इत्यभिमन्त्र्य हिरण्यं दक्षिणा च ॥ ३ ॥

यदि पार्वणस्त्वकृतोऽन्यतरस्ततश्चरुरग्नये वैश्वानराय स्वाहाऽग्नये तन्तुमते स्वाहेति होमातिक्रमे सायंदोषावस्तर्नमः स्वाहाप्रातर्वस्तर्नमः स्वाहेति यावतो होमास्तावन्तो हुत्वा पूर्ववद्धोमः ॥ ४ ॥

कपोतोलूकाभ्यामुपवेशने देवाः कपोत इति प्रत्यृचं जुहुयाद् दुःस्वप्नदर्शने चारिष्टदर्शने च निशायां काकशब्दक्रान्ते चान्येन चाद्भुतेषु च पयसा चरुं स्नपयित्वा सरूपवत्सायाः गोः पयसि न त्वेव तु कृष्णाया रात्रीसूक्तेन प्रत्यृचं जुहुयाद्धुतशेषं महाव्याहृतिभिः प्राश्य भद्रं कर्णेभिरिति कर्णौ शतमिन्नु शरदो अन्तिदेवा इत्यात्मानमभिमन्त्र्य ब्राह्मणेभ्यः किञ्चिद्दद्यात् ॥ ५ ॥

व्याधौ समुत्थित इमा रुद्राय तवसे कपर्दिन इति प्रत्यृचं गावेधुकं चरुं जुहुयात् ॥ ६ ॥

अकृतसीमन्तोन्नयने चेत् प्रजायेताकृतजातकर्मासीत्ततोऽतीते दशाह उत्सङ्गे मातुः कुमारकं स्थापयित्वा महाव्याहृतिभिर्हुत्वा पूर्ववद्धोमः ॥ ७ ॥

स्थूणाविरोहणे स्थालं पाकं श्रपयित्वा याविष्ठा जनयन् कर्वराणि पिशङ्गरूपः सुभरो वयोधा इति द्वाभ्यां चरुं जुहुयाद्यदि प्रणीता चरुराज्यस्थाल्यन्यदपि मृन्मयं भिन्नं स्रुवेत् सर्वप्रायश्चित्ताहुतीर्हुत्वा यन्नूते चिदिति तृचेन भिन्नमनुमन्त्रयते यद्यत् समाप्ते होमे पवित्रे नश्यते सर्वप्रायश्चित्तं हुत्वाऽप्स्वग्न इति पुनरुत्पादयेत् ॥ ८ ॥

अथ सपिण्डीकरणम् । चत्वार्युदपात्राणि पूरयित्वा पितुः प्रभृति तद्वत्पिण्डान् कल्पयित्वा, ये समानाः समनसः पितरो यमराज्ये तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम्। ये समानाः समनसो जीवा जीवेषु मामकाः तेषां श्रीर्मयि कल्पतामस्मिँल्लोके शतं समाः समानो मन्त्र इति द्वाभ्यामाद्यं पिण्डं त्रिषु विभजेत्तथैवार्घ्यपात्राण्येवं मातुर्भ्रातुर्भार्यायाः पूर्वमारिण्या एभिः पिण्डैः प्रक्षिप्य ॥ ९ ॥

यदि गृहे मधूका मधु कुर्वन्त्युपोष्यौदुम्बरीः समिधोऽष्टशतं दधिमधुघृताक्ता, मा नस्तोक इति द्वाभ्यां जुहुयाच्छन्न इन्द्राग्नी इति च सूक्तं जपेत् सर्वेषु च कर्मसु प्रतिश्रुतादिषु प्रादेशमात्रीः पालाशीः समिधः सप्तदश हुत्वा पश्चात् स्रुवग्रहणं दर्शपूर्णमासयोः पञ्चदशमध्यावर्षेष्टके तिस्रो वा भवन्ति पितृयज्ञवद्धोमः ॥१०॥

यदि गृहे वल्मीकसम्भूतिर्गृहोत्सर्गोऽथ त्रिरात्रमुपोष्य महाशान्तिं कुर्यान्महाशान्तिं कुर्यात् ॥ ११ ॥ इति गृह्यसूत्रे पञ्चमोऽध्यायः ॥ ५ ॥

अथातो ब्रह्माणं ब्रह्मऋषिं ब्रह्मयोनिमिन्द्रं प्रजापतिं वशिष्ठं वामदेव्यं कहोळं कौषीतकिं महाकौषीतकिं सुयज्ञं शाङ्खायनम् आश्वलायनमैतरं महैतरं कात्यायनं शाठ्यानं बभ्रुं बाभ्रव्यं मण्डुं माण्डव्यं सर्वानेव पूर्वाचार्यानस्य स्वाध्यायारण्यकस्य नियमानुदाहरिष्यामोऽहोरात्रं ब्रह्मचर्य्यमुपेत्याचार्योऽमांसाशीमपिहितं चण्डालं सूतिकां रजस्वलान्तेदनियमहस्तकदर्शनान्यनध्यापकानिशवरूपाणां च यान्यास्येन प्रविशेयुर्वान्तकृतश्मश्रुकर्ममांसाशनश्राद्धसूतकभोजनेषु ग्रामाऽध्ययनानन्तर्हितान्यहानि त्रिरात्रो नवक्लृप्तः पराभिवृष्ट उपपर्वणामह्न उत्तरार्द्धानि चाग्निविद्युत्स्तनयित्नुवर्षामहाभ्र-

प्रादुर्भावाश्च वाते च शर्कराकर्षणि यावत्कालम् ॥ १ ॥

ऊर्द्ध्वमाषाढ्याश्चतुरो मासान्नाधीयीतात्यन्तं शक्य इति नियमाः प्राग्ज्योतिषमपराजितायां दिशि पुण्यमुपगम्य देशमनुदित उदग्ग्रहणं मण्डलप्रवेशश्चाञ्जनगन्धिमित्येतयर्चा मण्डलं तु प्राग्द्वारमुदग्द्वारं वा जनाग्रीयमसम्प्रमाणमसंबाधमावामदेव्यमुत्तरशान्तिः। पुनः प्राभ्येषणं च मण्डलस्थाभिराचम्य प्राधीयीरन् कृतशान्तयः शान्तिपात्रोपघाते प्रोक्षणं प्रायश्चित्तिः प्रोक्षणं तु हिरण्यवता पाणिना दर्भपिञ्जूलवता वेति भाषिकम् ॥ २ ॥

अथ प्रविश्य मण्डलं प्राङ्मुख आचार्य उपविशत्युदङ्मुखा दक्षिणत इतरे यथाप्रधानमसम्भवेत्सर्वतोमुखा प्रतीक्षेरन्नुदयमादित्यस्य विज्ञाय चैनं दीधितिमन्तमधीहि भो३ इति दक्षिणैर्दक्षिणं सव्यैः सव्यं दक्षिणोत्तरैः पाणिभिरुपसंगृह्य पादावाचार्य्यस्य निर्णिक्तावथाधाय शान्तिपात्रे दूर्वाकाण्डवतीष्वप्स्वपिन्वमानैः पाणिभिः प्राधीयीरन्नेष विधिर्यदि तु ग्लायेरन्नेक एषामशून्यं शान्तिभाजनं कुर्यादध्यायाद्यन्तयोश्च सर्वे तत्मन्ततमव्यवच्छिन्नं भवत्यप्रशान्तिरोंकारो महाव्याहृतयः सावित्री रथन्तरं बृहद्वामदेव्यं पुनरादायं ककुप्कारमिति बृहद्रथन्तरे दशैताः सम्पादिता भवन्ति दशदशिनीविराळित्येतद्ब्राह्मणम् ॥ ३ ॥

अदब्धं मन इषिरं चक्षुः सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हिंसीरिति सवितारमीक्षन्ते युवं सुराममिस्येका स्वस्ति नः पथ्यास्वस्ति च तिस्र इति च तस्य शक्करीणां तु पूर्वं प्रसस्मै पिपीषते योरपिबोरयितमस्त्यसुबो अप्रहणामिति त्रयस्तृचा, अम्मा अस्मा इदन्धस इति प्रशास्ति वीरयुरित्यभितशक्करीणामथोपनिषदां यैवं महाव्रतस्य संहितानां तु पूर्वम् । ऋतं वदिष्यामि सत्यं वदिष्यामीति

ाशेषोऽथ मन्थस्य तत्सवितुर्वृणीमहे तत्सवितुर्वरेण्यमिति पूर्वे चा-
दध्वं मन इत्याधिकारिका शान्तयस्तत इत्याह्निकमथोत्थानकाले-
पकृष्य पापं नित्यां शान्तिं कृत्वादितः शुक्रियं दधत इत्यादि-
मीक्षन्ते ॥ ४ ॥

तमहमात्मनीत्यात्मानमभिनिहितं त्रिर्हितमुपमा श्रीर्जुषतामु-
यशोऽनुमा श्रीर्जुषतामनुयशः सेन्द्रः सगणः सबलः सयशः सवीर्य
त्तिष्ठानित्यनिष्ठतु श्रीर्मा उत्तिष्ठतु यशो मा उत्तिष्ठतु त्वित्युत्था-
दमहं द्विषतं भ्रातृव्यपाप्मानमलक्ष्मीं चापधुनोमीति वस्त्रान्तमव-
ायमाच इति सूक्तमिन्द्रश्च मृळयाति न इति द्वे, यत इन्द्र भ-
ामहे इत्येका, शास इत्था महा असीति प्राचीं स्वस्तिदा इति
क्षिणां दक्षिणावृतो विरक्ष इति प्रतीचीं विन इन्द्रेत्युदीचीं स-
पावृतोपेन्द्रेति दक्षिणावृतो दिवमुदीक्षन्ते ॥ ५ ॥

सविता पश्चात्तात्चक्षुरित्यादित्यमुपस्थाय व्यावर्त्तमानाश्च
त्यायन्त्युपविशन्ति यथापः शान्ता इति शान्तिपात्रादप आदाय
थिव्यामवनिनीय यथापृथिवीत्यस्माभिकर्षत्येवं मयि शाम्यत्विति
क्षिणेंऽशे निलिम्पत्येवं द्वितीयमेवं तृतीयं काण्डात्सम्भवसि
ाण्डात्काण्डात् प्ररोहसि शिवा नः शाले भवेति दूर्वाकाण्डमा-
ाय मूर्द्धनि कृत्वाऽग्निस्तृप्यतु वायुस्तृप्यतु सूर्यस्तृप्यतु विष्णु-
तृप्यतु प्रजापतिस्तृप्यतु विरूपाक्षस्तृप्यतु सहस्राक्षस्तृप्यतु सर्व-
ूतानि तृप्यन्त्विति सुमन्तुजैमिनिवैशम्पायनपैलाद्या आचार्या
तृन्मत्यात्मिका समुद्रव इत्यपो निनीय वामदेव्यं जपित्वा य-
ाकामं विप्रतिष्ठन्ते यथागमप्रज्ञाश्रुतिस्मृतिविभवादक्रान्तमानाद्-
वादप्रतिष्ठादभयं शंभवेन्नो अस्तु नमोऽस्तु देवऋषिपितृमनुष्ये-
्यः शिवमायुर्वपुरनामयं शान्तिमरिष्टिमक्षितिमोजस्तेजो यशो

बलं ब्रह्मवर्चसं कीर्तिमायुः प्रजां पशून्नमो नमस्कृता वर्द्धयन्तु दुष्टु-तादुरूपयुक्तान्यूनाधिकाच्च सर्वस्मा स्वस्ति देवऋषिभ्यश्च ब्रह्म सत्यं च पातु मामिति ब्रह्म सत्यं च पातु मामिति ॥ ६ ॥

इति शाङ्खायनशाखायाः कौषीतकिगृह्यसूत्रे षष्ठोऽध्यायः समाप्तः ॥ ६ ॥

समाप्तोऽयं ग्रन्थः ॥ इदमेव कौशिकसूत्रम् ॥